वाजिनः । सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्[1] ॥ द्रौणे मे त्वं महाभाग रुद्रतेजःसमुद्भव । आयुर्बलं यशो देहि अश्वत्थामन् नमोऽस्तु ते ॥ अश्वत्थामानमावाहयामि ॥ बलिः :— बलं धेहीति मन्त्रस्य विश्वामित्र ऋषिः बृहती छन्दः इन्द्रो देवता । बल्यावाहने विनियोगः । ॐ बलं धेहि तनूषु नो बलमिन्द्रानळुत्सु नः । बलं तोकाय तनयाय जीवसे त्वं हि बलदा असि[2] ॥ दैत्येन्द्रकुलसंभूत यज्ञदानक्रियारत । बले त्वां शरणं यामि दीर्घमायुः प्रयच्छ मे ॥ बलिमावाहयामि ॥ वेदव्यासः— युध्म इति मन्त्रस्य वसिष्ठ ऋषिरिन्द्रस्त्रिष्टुप् । वेदव्यासावाहने विनियोगः । ॐ युध्मो अनर्वा खजकृत्समद्वा शूरः सत्राषाड् जनुषेमषाळ्हः । व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान[3] ॥ वसिष्ठकुलसंभूत वेदशास्त्रविशारद । नारायणांशसंभूत वेदव्यास नमोऽस्तु ते ॥ वेदव्यासमावाहयामि ॥ हनूमान् — तव वायविति मन्त्रस्य आङ्गिरस ऋषिः गायत्री छन्दः वायुर्देवता । हनूमदावाहने विनियोगः । ॐ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे[4] ॥ अञ्जनीगर्भसंभूत कपीन्द्र सचिवोत्तम । रामप्रिय नमस्तुभ्यं हनूमन् रक्ष मां सदा ॥ हनूमन्तमावाहयामि ॥ बिभीषणः— कास्येति मन्त्रस्य बभ्रुर्ऋषिः इन्द्रो देवता त्रिष्टुप् छन्दः । बिभीषणावाहने विनियोगः । ॐ क स्य वीरः को अपश्यदिन्द्रं सुखरथमीयमानं हरिभ्याम् । यो राया वज्री सुतसोममिच्छन् तदोको गन्ता पुरुहूत ऊती[5] ॥ बिभीषण नमस्तुभ्यं रामपादाब्जपूजक । आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन ॥ बिभीषणमावाहयामि ॥ कृपः :— दीर्घतमा इति मन्त्रस्य दीर्घतमा आश्विनौ देवता अनुष्टुप् छन्दः । कृपावाहने विनियोग ॥ ॐ दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे । अपामर्थं यतीनां ब्रह्मा भवति सारथिः[6] ॥ द्विजेन्द्र भरताचार्य सर्वविद्याविशारद । शरणं त्वां

---

१. ऋसं. ४.३९.६. २. ऋसं. ३.५३.१८. ३. ऋसं. ७.२०.३. ४. ऋसं. ८.२६.२१. ५. ऋसं. ५.३०.१. ६. ऋसं. १.१५८.६.

**प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥ कृपमावाहयामि ॥** परशुरामः—परशुई नामेत्यस्य मन्त्रस्य वृषाकपिर्ऋषिः इन्द्रो देवता पञ्चपदा पङ्क्तिश्छन्दः । परशुरामावाहने विनियोगः । **ॐ पर्शुर्ह नाम मानवी साकं ससूव विंशतिम् । भद्रं भल त्यस्या अभूद्यस्या उदरमामयद्विश्वस्मादिन्द्र उत्तरः[१] ॥ रेणुकेय महावीर्य कार्तवीर्यकृतान्तक । आयुः प्रयच्छ मे राम जामदग्न्य नमोऽस्तु ते ॥ परशुराममावाहयामि ॥** कुमुदादयः—तथा कुमुदादिषोडशदेवताः प्रतिकलशं पूर्वादिप्रादक्षिण्येन भूरादिव्याहृतिपूर्वकनाममन्त्रैरावाहयेत् । कुमुदं कुमुदाक्षं पुण्डरीकं वामनं शङ्कुकर्णं सर्पनेत्रं किष्किन्धं शंकरं हेमं मेरुं सुकुमारं बाहुलकं विजयमनन्तं पिङ्गलकेशमिति ॥ संवत्सरदेवताः— संवत्सरेत्यस्य मन्त्रस्य वसिष्ठ ऋषिः अनुष्टुप् छन्दः मण्डूका देवता । संवत्सरदेवतावाहने विनियोगः । **ॐ संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः[२]** ॥ संवत्सरः स्मृतो वह्निस्तथार्कः परिवत्सरः । इदापूर्वस्तथा सोमो ह्यनुपूर्वः प्रजापतिः ॥ इत्पूर्वश्च तथा प्रोक्तो देवदेवो महेश्वरः । तेषां मण्डलविन्यासः प्राग्वदेव विधीयते ॥ प्रभवादिक्षयान्तानि षष्टिवर्षाणि द्वादशधा विभज्य तदवयवभूतस्य वर्षपञ्चकयुगान्तर्गतस्य प्रत्येकं संवत्सरस्य यथाक्रमं वह्न्यर्कसोमप्रजापतिमहेश्वरदेवता भवन्ति । एतासां देवतानां पृथक् पृथग् द्वादशवारमावृत्य अथवा एकदैव पञ्चानां देवतानां तत्तत्संख्याकेषु पृथक् पृथक् कलशेषु अथवैकस्मिन्नेव कलशे पूर्णपात्रोपरि पूगीफलेषु आवाह्य पूजयेत् ॥ ऋतुदेवताः— **ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितं नो अस्तु । तेषामृतूनां शतशारदानां निवात एषामभये स्याम[३]** ॥ मासदेवताः— आ पवस्वेत्यस्य मन्त्रस्य मारीचः कश्यप ऋषिः पङ्क्तिश्छन्दः पवमानः सोमो देवता । मासदेवतावाहने विनियोगः । **ॐ आ पवस्व दिशां पत आर्जीकात् सोम मीढ्वः । ऋतवाकेन सत्येन श्रद्धया तपसा सुत इन्द्रायेन्दो परि स्रव[४]** ॥ विष्णुं मधुसूदनं त्रिविक्रमं वामनं

---

१. ऋसं. १०.८६.२३. २. ऋसं. ७.१०३.१. ३. तैसं. ५.७.२.४. ४. ऋसं. ९ ११३.२.

श्रीधरं हृषीकेशं पद्मनाभं दामोदरं केशवं नारायणं माधवं गोविन्दमिति द्वादश मासदेवताः पूर्ववदावाह्य पूजयेत् ॥

पक्षदेवते— पूर्वापरमित्यस्य जगती सोमार्कौ देवते सूर्या ऋषिः । पक्षदेवतावाहने विनियोगः ॥ ॐ पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः[1] ॥ इति पूर्णपात्रोपरि पूगीफलयोः सूर्यचन्द्रौ आवाहयेत् ॥

नक्षत्रदेवताः— वैश्वानरमित्यस्य मन्त्रस्य मूर्धन्वान् ऋषिः सूर्यो देवता त्रिष्टुप् छन्दः । नक्षत्रदेवतावाहने विनियोगः । ॐ वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यम् । नक्षत्रं प्रत्नममिनच्चरिष्णु यक्षस्याध्यक्षं तविषं बृहन्तम्[2] ॥ नवोनवो०[3] ॥ अश्विनीकुमारौ यममग्निं प्रजापतिं सोमं रुद्रम् अदितिं बृहस्पतिं सर्पं पितरमर्यमणं भगं सवितारम् इन्द्रं वायुम् इन्द्राग्नी मित्रम् इन्द्रं पितॄन् अपः विश्वान् देवान् विधिं विष्णुं वसून् इन्द्रम् अजमेकपादम् अहिं बुध्न्यं पूषणमित्यष्टाविंशतिनक्षत्रदेवताश्चावाह्य पूर्ववत् पूजयेत् ॥

राशिदेवताः— कुजं शुक्रं बुधं चन्द्रं रविं गुरुं शनिम् इत्येता राशिदेवताः पूर्णपात्रे पूगीफलेषु आवाह्य तत्तन्मन्त्रैः पूजयेत् । तिथिदेवताः— दिवस्परीति मन्त्रस्य भालन्दनो वत्सप्रिर्ऋषिः त्रिष्टुप् छन्दः आग्निर्देवता । तिथिदेवतावाहने विनियोगः । ॐ दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः[4] ॥ वह्निं ब्रह्माणं गौरीं गणेशम् अहिं गुहं रविं शिवं दुर्गाम् अन्तकं विश्वं हरिं कामं शिवं राशिं पितरम् इति षोडश तिथिदेवताः पूर्ववदावाह्य पूजयेत् ॥

बारदेवताः—दासपत्नीरित्यस्य मन्त्रस्य आङ्गिरसो हिरण्यस्तूप ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता । बारदेवतावाहने विनियोगः । ॐ दासपत्नीरहिगोपा

---

१. ऋसं.१०.८५.१८. २. ऋसं.१०.८८.१३. ३. ऋसं १०.८५.१९. ४. ऋसं. १०.४५.१.

अतिष्ठन्निरुद्धा आपः पणिनेव गावः । अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद्ववार[१] ॥ अग्निम् अपः पृथ्वीं हरिम् इन्द्रम् इन्द्राणीं ब्रह्माणम् इत्येताः रविवारादिदेवताः ॥

दिक्पालाः— दिक्पालान् तत्तन्मन्त्रैरावाह्य पूर्णपात्रस्थपूगीफलेषु पूजयेत् ॥

क्रतुषाड्गुण्याः—गणानां त्वा०[२] ॥ जातवेदसे०[३] ॥ क्षेत्रस्य पतिना०[४] ॥ वास्तोष्पते प्रति०[५] ॥ त्र्यम्बकं यजामहे०[६] ॥ यत इन्द्र भयामहे०[७] ॥ इति मन्त्रैः क्रमशः गणपतिं दुर्गां क्षेत्रपालं वास्तोष्पतिं त्र्यम्बकम् अभयङ्करम् एतानावाह्य पूजयेत् ॥

षष्ठीदेवता— निगव्यव इत्यस्य मन्त्रस्य वसिष्ठ ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता । षष्ठ्यावाहने विनियोगः ॥ ॐ नि गव्यवोऽनवो द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा । षष्टिर्वीरासो अधि षड् दुवोयु विश्वेदिन्द्रस्य वीर्या कृतानि[८] ॥ द्विभुजां लेखनिधरां ज्ञानमुद्रोपेतां दिव्याभरणभूषितां षष्ठीमावाहयामि ॥ वर्धमाना – राजन्तमित्यस्य मधुच्छन्दो वर्धमानो जगती । वर्धमानावाहने विनियोगः । ॐ राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे[९] ॥ वर्धमानामावाहयामि ॥ न्यूनातिरिक्तदोषपरिहारकविष्णुः—इदं विष्णुरिति मन्त्रस्य मेधातिथिर्ऋषिर्गायत्री छन्दः विष्णुर्देवता । विष्ण्वावाहने विनियोगः । ॐ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे[१०] ॥ विष्णुमावाहयामि ॥ आत्मा देवानां०[११] ॥ तदस्तुमित्रावरुणा०[१२] ॥ ध्रुवा द्यौर्ध्रुवा

---

१. ऋसं. १.३२.११. २. ऋसं. २.२३.१. ३. ऋसं. १.९९.१. ४ ऋसं ४.५७.१. ५. ऋसं. ७.५४.१. ६. ऋसं ७.५९.१२. ७. ऋसं ८.६१.१३. ८. ऋसं. ७.१८.१४. ९. ऋसं १.१.८. १०. ऋसं. १.२२.१७. ११. ऋसं. १०.१६८.४. १२. ऋसं. ५.४७.७.

पृथिवी॰[1] ॥ ग्रहा वै प्रतिष्ठा॰ ॥ इत्येतैः मन्त्रैः प्रतिष्ठापयेत् ॥ ततः आधारशक्त्यादिपीठपूजां विधाय । भो मार्कण्डेय, अत्राऽऽगच्छाऽऽगच्छाऽऽत्राह्वयिष्ये । आवाहितो भव संस्थापितो भव सन्निहितो भव सन्निरुद्धो भव अवकुण्ठितो भव सुप्रसन्नो भव पूजां गृहाण वरदो भव क्षमस्व सान्निध्यं कुरु मम प्रसीद प्रसीद ॥ अस्य श्रीमार्कण्डेयमन्त्रस्य जैमिनिर्ऋषिः मार्कण्डेयो देवता । मार्कण्डेय अङ्गुष्ठाभ्यां नमः हृदयाय नमः । महाभाग तर्जनीभ्यां नमः शिरसे स्वाहा । सप्तकल्पान्तजीवन मध्यमाभ्यां नमः शिखायै वषट् । आयुरारोग्यमैश्वर्यम् अनामिकाभ्यां नमः कवचाय हूम् । देहि मे कनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट् । मुनिपुङ्गव करतलकरपृष्ठाभ्यां नमः अस्त्राय फट् ॥ अथ ध्यानम् – आजानुबाहुं जटिलं कमण्डलुधरं शुभम् । मृकण्डुतनयं ध्यायेद् द्विभुजं साक्षसूत्रकम् ॥ मार्कण्डेयमन्त्रं कलशे अष्टवारं जपेत् । पञ्चोपचारैः पूजयेत् । आवाहितसर्वदेवताः पुरुषसूक्तेन ध्यानावाहनादिपुष्पपूजान्तं विधाय मार्कण्डेयाय अङ्गपूजनम् अष्टोत्तरशतनामपूजां च कुर्यात् ।

अथाङ्गपूजा :—( ॐ इति मन्त्रादौ सर्वत्र योजयेत् । )

मार्कण्डेयाय नमः पादौ पूजयामि ॥ भृगुवंशसमुद्भवाय नमः गुल्फौ पूजयामि ॥ जगद्वन्द्याय नमः जानुनी पूजयामि ॥ उरुस्थैर्याय नमः ऊरू पूजयामि ॥ धर्मधात्रे नमः कटिं पूजयामि ॥ अघनाशनाय नमः नाभिं पूजयामि ॥ वेदविदे नमः उदरं पूजयामि ॥ त्रिकालज्ञाय नमः हृदयं पूजयामि ॥ मृकण्डुपुत्राय नमः स्तनौ पूजयामि ॥ शुभ्रयज्ञोपवीताय नमः कण्ठं पूजयामि ॥ महोर्ध्वबाहवे नमः बाहू पूजयामि ॥ कमण्डलुधराय नमः हस्तौ पूजयामि ॥ प्रसन्नवदनाय नमः मुखं पूजयामि ॥ प्राणायामपरायणाय नमः नासिकां पूजयामि ॥ ज्ञानचक्षुषे नमः नेत्रे पूजयामि ॥ जितेन्द्रियाय नमः कर्णौ पूजयामि ॥ दीर्घजीवाय नमः ललाटं पूजयामि ॥ जटिलाय नमः शिरः पूजयामि ॥ इत्यङ्गपूजा ॥

अष्टोत्तरशतनामपूजा —( ॐ इति प्रणवं सर्वत्र योजयेत् )

मार्कण्डेयाय नमः ॥ भार्गवर्षभाय नमः ॥ ब्रह्मर्षिवर्याय नमः ॥ दीर्घजीवाय नमः ॥ महात्मने नमः ॥ सर्वलोकहितैषिणे

---

१. ऋसं. १०.१७३.४.

नमः ॥ ज्ञानार्णवाय नमः ॥ निर्विकाराय नमः ॥ वाग्यताय नमः ॥ जितमृत्यवे नमः ॥ संयमिने नमः ॥ ध्वस्तक्लेशान्तरात्मने नमः ॥ दुराधर्षाय नमः ॥ धीमते नमः ॥ निःसङ्गाय नमः ॥ भूतवत्सलाय नमः ॥ परमात्मैकान्तभक्ताय नमः ॥ निर्वैराय नमः ॥ समदर्शिने नमः ॥ विशालकीर्तये नमः ॥ महापुण्याय नमः ॥ अजराय नमः ॥ अमराय नमः ॥ त्रैकालिकमहाज्ञानाय नमः ॥ विज्ञानवते नमः ॥ विरक्तिमते नमः ॥ ब्रह्मवर्चस्विने नमः ॥ पुराणाचार्याय नमः ॥ प्राप्तमहायोगमहिम्ने नमः ॥ अनुभूताद्भुतभगवन्मायावैभवाय नमः ॥ सर्वधर्मविदां वराय नमः ॥ सत्यव्रताय नमः ॥ सर्वशास्त्रार्थपरायणाय नमः ॥ तपःस्वाध्यायसंयुताय नमः ॥ बृहद्व्रतधराय नमः ॥ शान्ताय नमः ॥ जटिलाय नमः ॥ वल्कलाम्बराय नमः ॥ कमण्डलुधराय नमः ॥ दण्डहस्ताय नमः ॥ शुभ्रयज्ञोपवीताय नमः ॥ सुमेखलाय नमः ॥ कृष्णाजिनभृते नमः ॥ नरनारायणप्रियाय नमः ॥ अक्षसूत्रधराय नमः ॥ महायोगाय नमः ॥ रुद्रप्रियाय नमः ॥ भक्तकामदाय नमः ॥ आयुष्प्रदाय नमः ॥ आरोग्यदायिने नमः ॥ सर्वैश्वर्यसुखदायकाय नमः ॥ महातेजसे नमः ॥ महाभागाय नमः ॥ जितविक्रमाय नमः ॥ विजितक्रोधाय नमः ॥ ब्रह्मज्ञाय नमः ॥ ब्राह्मणप्रियाय नमः ॥ मुक्तिदाय नमः ॥ वेदविदे नमः ॥ मान्याय नमः ॥ सिद्धाय नमः ॥ धर्मात्मने नमः ॥ प्राणायामपरायणाय नमः ॥ शापानुग्रहशक्ताय नमः ॥ वन्द्याय नमः ॥ शमधनाय नमः ॥ जीवन्मुक्ताय नमः ॥ श्रद्धावते नमः ॥ ब्रह्मिष्ठाय नमः ॥ भगवते नमः ॥ पवित्राय नमः ॥ मेधाविने नमः ॥ सुकृतिने नमः ॥ कुशासनोपविष्टाय नमः ॥ पापहराय नमः ॥ पुण्यकराय नमः ॥ जितेन्द्रियाय नमः ॥ अग्न्यर्कोपासकाय नमः ॥ धृतात्मने नमः ॥ धैर्यशालिने नमः ॥ महोत्साहाय नमः ॥ उरुस्थैर्याय नमः ॥ उत्तारणाय नमः ॥ सिद्धसमाधये नमः ॥ क्षमावते नमः ॥ क्षेमकर्त्रे नमः ॥ श्रीकराय नमः ॥ समलोष्टाश्मकाञ्चनाय नमः ॥ छिन्नसंशयाय नमः ॥ संशयच्छेत्रे नमः ॥ शोकशून्याय नमः ॥ शोकहराय नमः ॥ सुकर्मणे नमः ॥ जयशालिने नमः ॥ जयप्रदाय नमः ॥ ध्यानधनाय नमः ॥ शान्तिदाय नमः ॥ नीतिमते नमः ॥ निर्द्वन्द्वाय नमः ॥ सर्वभूतात्मभूतात्मने नमः ॥ विनयपूर्णाय नमः ॥ स्थिरबुद्धये नमः ॥ ब्रह्मयोगयुक्तात्मने नमः ॥ अन्तःसुखाय नमः ॥ अन्तरारामाय नमः । अन्तर्ज्योतिषे नमः ॥

**विगतेच्छाय नमः** ।। **विगतभयाय नमः** इति ।। **नमस्तुभ्यं द्विजश्रेष्ठ दीर्घजीविन्नमोऽस्तु ते । नारायणस्वरूपाय नमस्तुभ्यं महात्मने ।। नमो मृकण्डुपुत्राय सर्वलोकहितैषिणे । ज्ञानार्णवाय वै तुभ्यं निर्विकाराय वै नमः ।।**
तथा सर्वासां देवतानां धूपदीपादिमहापूजां कृत्वा कर्म समापयेत् ।।

इति कलशावाहनपूजनादि ।।

## द्वितीयेऽहनि

प्रातः कृतनित्यक्रियः आवाहितदेवतापूजां विधाय प्राङ्मुखो यजमान आचम्य प्राणानायम्य देशकालौ संकीर्त्य " करिष्यमाणोग्ररथशान्तिकर्मणः प्रधानहोमाङ्गत्वेनादौ सकलदुष्टग्रहबाधानिवृत्तिपूर्वकग्रहानुकूल्यसिद्ध्यर्थं ग्रहयज्ञम् अकालमृत्युपीडापरिहारपूर्वकदीर्घायुर्वृद्ध्यर्थं त्र्यम्बकमृत्युञ्जयप्रीत्यर्थं सतिलदूर्वाहोमं च तन्त्रेण सद्यः करिष्ये " इति संकल्पयेत् ।।

ततः आचार्यो विधिवद् अग्निजननं[1] कुर्यात् । अत्रान्वाधानम् ।। ' देवतापरिग्रहार्थमन्वाधानं करिष्ये ' इति संकल्प्य समिद्द्वयमादाय अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन । प्रजापतिं प्रजापतिं चाधारदेवते आज्येन । अग्नीषोमौ चक्षुषी आज्येन । अत्र प्रधानम् – आदित्यादिनवग्रहान् प्रत्येकं तत्तन्मन्त्रैः समिच्चर्वाज्याहुतिभिः अष्टाविंशतिसङ्ख्याकाभिर्यक्ष्ये । अधिदेवताः प्रत्यधिदेवताश्च द्वे द्वे सङ्ख्याकाभिः तैरेव द्रव्यैर्यक्ष्ये । इन्द्राद्यष्टदिक्पालदेवताः क्रतुषाड्गुण्यदेवताः प्रत्येकम् एकैकसङ्ख्यया समिच्चर्वाज्यद्रव्यैर्यक्ष्ये । त्र्यम्बकमृत्युञ्जयं त्रिमध्वाक्त-[2] दूर्वाद्रव्येण घृताक्ततिलद्रव्येण च अष्टोत्तरसहस्रसङ्ख्याकाभिः त्र्यम्बकमन्त्रेण यक्ष्ये । पुनरत्र प्रधानं मार्कण्डेयम् अमृत - वट - तिल - दूर्वा - पयो - घृत - परमान्नानि इत्येतैर्द्रव्यैः अष्टोत्तरसहस्रसङ्ख्याकाभिर्यक्ष्ये । अधिदेवतां मृत्युं प्रत्यधिदेवतां यमं प्रत्येकं परं मृत्यो, यमाय सोमम् इति मन्त्राभ्याम् अष्टोत्तरशतसङ्ख्याकाभिः तैरेव द्रव्यैर्यक्ष्ये । सप्त चिरजीविनः अश्वत्थामानं बलिं व्यासं हनूमन्तं बिभीषणं कृपं परशुरामं च प्रत्येकं तैरेव द्रव्यैः अष्टोत्तरशतसङ्ख्याकाभिर्यक्ष्ये । कुमुदादिषोडशदेवताः प्रत्येकम् अष्टसङ्ख्याकाभिः पायसद्रव्येण यक्ष्ये । संवत्सर-ऋतु-मास-पक्ष-नक्षत्र-राशि-तिथि-वार-दिक्पाल-क्रतुषाड्गुण्य-षष्ठी-वर्धमान-देवताः प्रत्येकमेकैकसङ्ख्यया पायसेन यक्ष्ये । लिङ्गतोभद्रदेवताः एकैकसङ्ख्यया

---

१. दृश्यतां परिशिष्टम् । २. दधि मधु घृतमिति त्रिमधु ।

आज्येन यक्ष्ये। विश्वान् देवान् दशवारम् अग्निं षोडशवारं जातवेदसमग्निम् एकवार-माज्येन आयुष्यसूक्तेन प्रत्यृचा लाजाद्रव्येण यक्ष्ये। न्यूनातिरिक्तप्रायश्चित्तार्थं विष्णुम् इदं विष्णुरिति मन्त्रेण अष्टोत्तरशतसङ्ख्याकाभिः घृताक्ततिलद्रव्येण यक्ष्ये। शेषेण स्विष्टकृतमग्निमिध्मसंनहनेन रुद्रम्, अयासमग्निं देवान् विष्णुम् अग्निं वायुं सूर्यं प्रजापतिं चैताः प्रायश्चित्तदेवताः आज्येन, ज्ञाताज्ञातदोषनिबर्हणार्थं त्रिवारमग्निं मरुतश्चाज्येन, विश्वान् देवान् संस्रावेण। अङ्गदेवताः प्रधानदेवताः सर्वाः सन्निहिताः सन्तु। एवं साङ्गोपाङ्गेन कर्मणा सद्यो यक्ष्ये।

समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती। अन्वाधानसमिद्धोमे विनियोगः। **ॐ भूर्भुवः स्वः स्वाहा॥ प्रजापतय इदं न मम** इति त्यागः।

इत्यन्वाधाय ग्रहयज्ञं मृत्युञ्जययज्ञं कुर्यात्। तत्र मृत्युञ्जयहोमार्थं मन्त्रः— **ॐ ह्रौं जूं सः ॐ भूर्भुवः स्वः ॐ त्र्यम्बकं यजामहे ...... मामृतात् ॐ स्वर्भुवर्भूः ॐ सः जूं ह्रौं ॐ स्वाहा॥ मृत्युञ्जयायेदं न मम** इति त्यागः। ततः स्रुचि उपस्तीर्य हविःशेषचरुमेकदाऽवदाय द्विरभिघार्य **अग्नये स्वाहा॥ अग्नय इदं न मम** इति त्यागः। कुण्डस्येशानकोणे यजमानेऽन्वारब्धे पूर्वा आहुतीरसंसृज्य स्विष्टकृतममन्त्रकं जुहुयात्॥ स्रुचि द्वादशगृहीतेन आज्येन **ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः**[1]। इति पूर्णाहुतिं हुत्वा कर्ता अग्नेर्वायव्यदेशे तिष्ठन् अग्नि-मुपस्थाय विभूतिं गृहीत्वा अग्निं समन्त्रमर्चयेत्। न्यूनातिरिक्तप्रायश्चित्तार्थं नामत्रयजपं जप्त्वा भुञ्जीत॥

## तृतीयेऽहनि

कर्ता मङ्गलस्नानं विधाय कृतनित्यक्रियः द्विराचमनादिदेशकालान्ते मार्कण्डेया-दीनुद्दिश्य अद्य प्रधानहोमं करिष्ये इति संकल्प्य। आवाहितदेवता अग्निं च पूजयित्वा अन्वाधानानुक्रमेण मार्कण्डेयादिसर्वदेवता उद्दिश्य तत्तन्मन्त्रैर्होमं विधाय मार्कण्डेयाय अश्वत्थाम्ने बलये व्यासाय हनूमते बिभीषणाय कृपाय परशुरामाय इति चतुर्थ्यन्तेन पदेन त्यागः कार्यः। ततः स्विष्टकृतम्। स्रुच्युपस्तीर्य हविःशेषं चरुमवदाय द्विरभिघार्य

---

१. ऋसं. ६ ७.१.

**अग्नये स्विष्टकृते सुहुतहुते** इति मन्त्रेण उत्तरार्धपूर्वार्धे (कुण्डस्येशानभागे) अतिहाय पूर्वा आहुतीः यजमानेऽन्वारब्धे स्विष्टकृतं हुत्वा **मूर्धानं दिवो०** इति पूर्वदिनवत् पूर्णाहुतिं हुत्वा मार्कण्डेयाद्यावाहितदेवताः प्रार्थयेत् ॥

मार्कण्डेयः—**पुत्रपौत्रप्रदं नित्यं प्रार्थयामि महामतिम् । रत्नगर्भेसुमङ्गल्यचूतपल्लवशोभितम् । चन्दनाक्षतपुष्पाढ्यं पूर्णकुम्भं नमोऽस्तु ते ॥ आयुष्प्रद महाभाग सोमवंशविवर्धन । महाव्रत महाश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥ मार्कण्डेय महाभाग सप्तकल्पान्तजीवन । आयुरारोग्यमैश्वर्यमस्माकं वरदो भव ॥ नववर्षायुषं प्राप्य तपसा महता परम् । सप्तकल्पकृतं येन ह्यायुषं मे प्रयच्छतु ॥ क्षित्यब्वायुवियत्तेजोब्रह्मविष्णुमहेश्वराः । मामेव हि सदा पान्तु मार्कण्डेयो भवाम्यहम् ॥ मनो बुद्धिरहङ्कारचन्द्रादित्याश्च देवताः । मामेव हि सदा पान्तु चिरञ्जीवी भवाम्यहम् ॥ कालात्मरथमध्यस्थ उग्रवीर क्षयान्तक । ग्रहर्क्षवत्सराद्यात्मन् नमस्ते मृत्युनायक ॥ ममागतादुग्ररथभयादुद्धर रक्षक । पाहि पाहि महादेव त्वमेव शरणं मम ॥ षष्टिसंवत्सरे पूर्णे प्राप्ते ह्युग्ररथाह्वये । दीर्घायुषं तु मां कुर्वन् सुप्रीतो भव सर्वदा ॥ मार्कण्डेय महाभाग कल्पायुर्ज्ञानविग्रह । आयुर्बलं यशो धैर्यं यच्छ मे ब्रह्मनन्दन ॥** अश्वत्थामा — **द्रौणे मे त्वं महाभाग रुद्रतेजःसमुद्भव । आयुर्बलं यशो देहि अश्वत्थामन् नमोऽस्तु ते ॥** बलिः— **दैत्येन्द्रकुलसंभूत यज्ञदानक्रियारत । बले त्वां शरणं यामि दीर्घमायुः प्रयच्छ मे ॥** व्यासः— **वसिष्ठकुलसंभूत वेदशास्त्रविशारद । नारायणांशसंभूत वेदव्यास नमोऽस्तु ते ॥** हनुमान्— **अञ्जनीगर्भसंभूत कपीन्द्र सचिवोत्तम । रामप्रिय नमस्तुभ्यं हनूमन् रक्ष मां सदा ॥** विभीषणः— **बिभीषण नमस्तुभ्यं रामपादाब्जपूजक । आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन ॥** कृपः— **द्विजेन्द्र भरताचार्य सर्वविद्याविशारद । शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥** परशुरामः— **रेणुकेय महावीर्य कार्तवीर्यकृतान्तक । आयुः प्रयच्छ मे राम जामदग्न्य नमोऽस्तु ते ॥** षष्ठीदेवी:— **षष्ठि देवि नमस्तुभ्यं सूतिकागृहशायिनि । पूजिताऽसि परत्तया दीर्घमायुः प्रयच्छ मे ॥ आयुर्देह्यभयं देहि अद्य जन्मदिने मम । रक्ष रक्षस्व मां नित्यं देवानामपि रक्षिणि ॥ सर्वदेवप्रियकरि सर्वमङ्गलकं कुरु ॥**

इति संप्रार्थ्य पूर्वदिनवद् अग्नेः वायव्यदेशे तिष्ठन् अग्निमुपस्थाय विभूतिं गृहीत्वा अग्निं समन्त्रमर्चयेत् । प्रायश्चित्तार्थं नामत्रयजपं कृत्वा भुञ्जीत ॥

## चतुर्थेऽहनि

देशकालसंकीर्तनान्ते " मम उग्ररथहोमस्याङ्गभूतवसोर्धारां पूर्णाहुतिमुत्तराङ्गानि च सद्यः करिष्ये " इति संकल्प्य अग्निमावाहितदेवताश्च संपूज्य इध्मबन्धनरज्जुं हुत्वा आवाहितदेवताभ्यः बलिदानं कुर्यात् । ततः प्रायश्चित्ताज्याहुतीर्हुत्वा शान्तिकर्म कुर्यात् ॥

शान्तिकर्म —

दूर्वापुष्पं रोचनं च अर्चयेद् भक्तिमान् सुधीः ।
दर्पणं दधि सिद्धान्नं घृतं चासादयेत् क्रमात् ॥
तथा रक्षां च रक्षोघ्नद्रव्यैर्मङ्गलसाधनैः ।
द्विजाः कुर्वन्तु वेदज्ञा वेदमन्त्रैः शुभार्थिनः ॥
अग्ने त्वमिति मन्त्रेण नानाद्रव्यसमीक्षणम् ।
युञ्जन्तीति च मन्त्रेण मूर्ध्नि ह्यर्चनमारभेत् ॥
दीर्घतमा मेति घृते तस्मिन्नेवात्मलोचने ।
दधिक्राव्ण ऋचा तत्र ललाटे तिलकं लिखेत् ॥
दध्ना शिरसि दूर्वां च काण्डात्काण्डेति मन्त्रवित् ।
या फलिनीर्येत्यृचा स्वर्णं नमस्कुर्यात् फलोत्तमम् ॥
शिरसि प्रक्षिपेत् पुष्पं श्रीसूक्तोक्तैश्च मन्त्रकैः ।
आ कृष्णेनेति मन्त्रेण दर्पणे मुखदर्शनम् ॥
ज्योतिरसीति दीपं तु भुवस्त्विति भुवं स्पृशेत् ।
दूर्वां सितां सितां निम्बां रोचनं वेणुरोचनम् ॥
न्यग्रोधशृङ्गसिद्धार्थान् रत्नानि च विधारयेत् ॥

अत्र चायं क्रमः— अग्ने त्वं न इति सूक्तस्य बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च ऋषयः चतस्रो द्विपदा विराजः अग्निर्देवता । द्रव्यसमीक्षणे विनियोगः ॥ ( नानाद्रव्याणि सिद्धान्नं च वीक्षेत ) **ॐ अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥ स नो**

**बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः**[1] ॥ युञ्जन्ति ब्रध्नमरुषमिति मन्त्रस्य माधुच्छन्दसो ऋषिः गायत्री छन्दः इन्द्रो देवता । मूर्ध्नि अर्चने विनियोगः ॥ **ॐ युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा**[2] ॥ दीर्घतमेति मन्त्रस्य दीर्घतमा अश्विनौ अनुष्टुप् । घृते आत्मावेक्षणे विनियोगः ॥ **ॐ दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे । अपामर्थं यतीनां ब्रह्मा भवति सारथिः**[3] ॥ दधिक्राव्ण इति मन्त्रस्य वामदेव ऋषिः अनुष्टुप् छन्दः दधिक्रा देवता । तिलकधारणे विनियोगः । **ॐ दधिक्राव्णो०** ॥ काण्डात्काण्डेति मन्त्रेण शिरसि रोचनं सितां दूर्वां वेणुरोचनं सितां निम्बां न्यग्रोधश्रृङ्गं दूर्वा दधि च क्षिपेत् ॥ **ॐ काण्डात्काण्डात्०** ॥ याः फलिनीर्या इति मन्त्रस्य अथर्वणपुत्रो भिषङ् नाम ऋषिः अनुष्टुप् छन्दः ओषधी देवता । फलस्पर्शने विनियोगः ॥ **ॐ याः फलिनीर्या०** ॥ श्रीसूक्तेन पुष्पं शिरसि धारयेत् ॥ आ कृष्णेनेति मन्त्रस्य हिरण्यस्तूप ऋषिः जगती छन्दः सविता देवता । दर्पणावलोकने विनियोगः ॥ **ॐ आ कृष्णेन रजसा०**[4] ॥ **शुक्रमसि ज्योतिरसि तेजोऽसि देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः** ॥ इति दीपं प्रज्वाल्य ॥ भुवस्त्वमिति मन्त्रस्य वैकुण्ठ ऋषिः अभिसारिणी छन्दः इन्द्रो देवता । भूस्पर्शने विनियोगः ॥ **ॐ भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः । भुवो नॄंश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे**[5] ॥ इति शान्तिकर्म ॥

## पूर्णाहुतिर्वसोर्धारा च

ततो यजमानः " सर्वप्रपूरणीं भद्रप्रदां पूर्णाहुतिमाज्येन वसोर्धारां च होष्ये "

१. ऋसं. ५.२४.१-४. २. ऋसं. १.६.१-२. ३. ऋसं. १.१५८.६. ४. ऋसं. १.३५.२. ५. ऋसं. १०.५०.४.

इति संकल्प्य **इदं फलं मया देव०** ॥ **याः फलिनीर्या०** ॥ **युवं वस्त्राणि०**[1] ॥ एभिर्मन्त्रैः यथासंभवं नारिकेलकदल्यादिनानाफलानि वस्त्राणि चाग्नौ समर्प्य वह्नेरुपरि स्तम्भद्वयविधृतमौदुम्बरम् ऋजुकोटरं बाहुप्रमाणमार्द्रं प्रसेकं पूर्वाग्रं सुवर्णजिह्वया निबद्धं निदध्यात् । तस्योपरि शृङ्खलावलम्बितेन निर्मलघृतपूरितेन ताम्रेण मृन्मयेन वा कुम्भेनाधो यवमात्राच्छिद्रेणाधः पतन्तीं संततामाज्यधारां विदध्यात् । स्रुवेणाज्यं द्वादशवारं गृहीत्वा स्रुचं समाबिलं पूरयित्वा तस्यां स्रुवमूर्ध्वबिलं निधाय पुनरधोबिलं निक्षिप्य स्रुवाग्रे कुसुमाक्षतं निधाय सव्यपाणिना स्रुक्स्रुवमूले धृत्वा दक्षिणपाणिना स्रुक्स्रुवं यथा स्रुचः बिलम् अधः पतन्त्या आज्यधाराया अधोभागे प्रसेकस्योपरि स्यात्तथा शङ्खमुद्रया गृहीत्वा तिष्ठन् समपाद ऋजुकायः स्रुवाग्रन्यस्तदृष्टिः प्रसन्नात्मा समुद्रादूर्मिरिति सूक्तेन पूर्णाहुतिं जुहुयात् ॥

समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य गौतमो वामदेव आपस्त्रिष्टुप् अन्त्या जगती । पूर्णाहुतिहोमे विनियोगः ॥

**ॐ समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।**
**घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ १**
**वयं नाम प्र ब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।**
**उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ २**
**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥ ३**
**त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।**
**इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ ४**
**एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।**
**घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ ५**

---

१. ऋसं १.१५२.१.

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।

एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणो रीषमाणाः ॥ ६ ॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।

घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ७ ॥

अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ।

घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ ८ ॥

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि ।

यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥ ९ ॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।

इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ १० ॥

धामन् ते विश्वं भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरायुषि ।

अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम्[1] ॥११॥

**स्वाहा** ॥ यवपरिमितां धारां संततां स्रुगग्रेण सशेषं हुत्वा । **अद्भ्य इदं न मम** इति त्यागः ॥ वि ज्योतिषेत्यस्य जारो वृशोऽग्निस्त्रिष्टुप् । पूर्णाहुतिशेषाज्यहोमे विनियोगः । **ॐ वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे[2] स्वाहा** ॥ इत्यनेन आज्यशेषं हुत्वा । **अग्नय इदं न मम** इति त्यागः ॥ **विश्वेभ्यो देवेभ्यः स्वाहा** इति संस्रावं हुत्वा । **संस्रावभागेभ्यो विश्वेभ्यो देवेभ्य इदं न मम** इति त्यागः । ततस्तण्डुलकणान् समिद्दर्भशकलान् अद्भिः प्रोक्ष्याग्नौ प्रहरेत् ॥

---

१. ऋसं. ४.५८.१-११. २. ऋसं ५.२.९.

स्रुक्स्रुवौ पूर्वासादितस्थाने संस्थाप्य प्रसेकद्वारेण संततामनवच्छिन्नां पतन्तीं वसोर्धाराम् एभिर्मन्त्रैः पातयेत् । पतन्त्यां च तस्यां चमकानुवाकान् आग्नेयादीनि सूक्तानि श्रावयेत् । चमकानुवाकानामग्निः काण्डऋषिः आद्या वैष्णवी गायत्री शिष्टानां वाजादयोऽन्नादिविशेषा देवता यजुश्छन्दः । अग्निमीळ इति नवर्चस्य सूक्तस्य मधुच्छन्दा अग्निर्गायत्री । विष्णोर्नु कमिति षडृचस्य सूक्तस्य दीर्घतमा विष्णुरनुष्टुप् । आ ते पितर्मरुतामिति पञ्चदशर्चस्य सूक्तस्य गृत्समदः शौनको रुद्रस्त्रिष्टुप् । स्वादिष्ठयेति दशर्चस्य सूक्तस्य पवमानः सोमो गायत्री । कायमान इति महावैश्वानरसाम्नो वैश्वानरो महावैश्वानरः पथ्या बृहती । मूर्धानमिति ज्येष्ठसाम्नो भरद्वाजो वैश्वानरस्त्रिष्टुप् । वसोर्धारायां विनियोगः । सामगानामसंभवे ऋङ्मन्त्रं पठेत् ॥

तत्र मन्त्राः । चमकानुवाकमन्त्राः[1] । तेषु '**कूयवाश्च मे**' इति मन्त्रो द्वादशवारमावर्तनीयः ॥

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ १ ॥**

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति ॥ २ ॥**

**अग्निना रयिमश्नवत् पोषमेव दिवेदिवे । यशसं वीरवत्तमम् ॥ ३ ॥**

**अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद् देवेषु गच्छति ॥ ४ ॥**

**अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः । देवो देवेभिरागमत् ॥ ५ ॥**

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत् तत् सत्यमङ्गिरः ॥ ६ ॥**

**उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ ७ ॥**

**राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे ॥ ८ ॥**

**स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये[2] ॥ ९ ॥**

**विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि वि ममे रजांसि ।**

**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥**

---

१ तैसं ४.७.१-११. २. ऋसं. १.१.१-९

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥
यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥
तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥५॥
ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि[1] ॥ ६ ॥
आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्रजायेमहि रुद्र प्रजाभिः ॥ १ ॥
त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः ।
व्यस्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥ २ ॥
श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥ ३ ॥
मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥
हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय ।
ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥

---

१. ऋसं. १.१५४ १-६

उन्मा ममन्द वृषभो मरुत्वान् त्वक्षीयसा वयसा नाधमानम् ।
घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥ ६ ॥
क्व स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥ ७ ॥
प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि ।
नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥ ८ ॥
स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम् ॥ ९ ॥
अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ १० ॥
स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥
कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥
या वो भेषजा मरुतः शुचीनि या शन्तमा वृषणो या मयोभु ।
यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि ॥ १३ ॥
परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥ १४ ॥
एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि ।
हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः[1] ॥ १५ ॥

---

[1] ऋसं. २.३३.१-१५.

ॐ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥१॥
रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ २ ॥
वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥
अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ ४ ॥
त्वामच्छा चरामसि तदिदर्थं दिवेदिवे । इन्द्रो त्वे न आशसः ॥ ५ ॥
पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ६ ॥
तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश । स्वसारः पार्ये दिवि ॥७॥
तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम् । त्रिधातु वारणं मधु ॥ ८ ॥
अभीममघ्न्या उत श्रीणन्ति धेनवः शिशुम् । सोममिन्द्राय पातवे ॥ ९ ॥
अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते । शूरो मघा च मंहते[1] ॥ १० ॥

कायमानो[2]०, मूर्धानम्[3]० इति सामनी पठेयुः ऋङ्मन्त्रौ वा । इति वसोर्धारा ॥

अवभृथस्थाने पूर्णपात्रजलेन मार्जनं कुर्यात् । ततो मण्डपस्य ऐशान्यां ग्रहवेद्याः प्रागुदीच्यां शुचौ देशे संमृष्टे पञ्चरङ्गेण स्वस्तिकं कृत्वा । चतुष्पदं दीर्घचतुरस्रं सोत्तरच्छदं पीठं निधाय तत्रोदगग्रान् अमूलान् हरितदर्भानास्तीर्य तत्र यजमानं सकुटुम्बं प्राङ्मुखमुपवेश्याचार्य ऋत्विग्भिः सह मङ्गलवाद्यैरभिषेककुम्भोदकं पात्रान्तरे आदाय प्राङ्मुखस्तिष्ठन् सपलाशयौदुम्बर्याऽऽर्द्रशाखया सकुशदूर्वापल्लवया अभिषिञ्चेत् ॥

## अभिषेकः

शं न इन्द्राग्नी इति पञ्चदशर्चस्य सूक्तस्य वसिष्ठो विश्वे देवास्त्रिष्टुप् । सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायणः पुरुषोऽनुष्टुप् षोडशी त्रिष्टुप् । परं मृत्यो इति चतुर्दशर्चस्य सूक्तस्य संकुसुको विश्वे देवास्त्रिष्टुप् एकादशी प्रस्तारपङ्क्ति-

---

१. ऋसं. ९.१.१-१० २. ऋसं. ३.९.७. ३. ऋसं. ६.७.

स्त्रयोदशी जगती चतुर्दश्यनुष्टुप् । एष वां देवाविति द्वयोः परावतो य इति सप्तदशर्चस्य स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छन्दाः सोमः पवमानो गायत्री । यज्जाग्रत इति षडृचस्य सूक्तस्य प्रजापतिर्मनस्त्रिष्टुप् । अभिषेके विनियोगः । ततो ग्रहमन्त्रैः सुरास्त्वेति नवभिस्तच्छंयोरित्यनेन च अभिषेकः कार्यः । ते च मन्त्राः—

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥ १ ॥
शं नो भगः शमु नः शंसो अस्तु शं नः पुरन्धिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥ २ ॥
शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥ ३ ॥
शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥ ४ ॥
शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥
शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह श्रृणोतु ॥ ६ ॥
शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ।
शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदिः ॥ ७ ॥
शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥
शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥
शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥११॥
शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १२ ॥
शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ।
शं नो अपां नपात् पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥ १३ ॥
आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः ।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ १४ ॥
ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥[1]
सहस्रशीर्षा पुरुषः० इति सूक्तम् ॥[2]
परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ १ ॥
मृत्योः पदं योपयन्तो यदेत द्राघीय आयुः प्रतरं दधानाः ।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥ २ ॥
इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥ ३ ॥

---

१. ऋसं. ७.३५.१-१५. २ ऋसं १ .९०.

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ४ ॥
यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु ।
यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषाम् ॥ ५ ॥
आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ ।
इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥ ६ ॥
इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवोऽनमीवा सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥ ७ ॥
उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ ८ ॥
धनुर्हस्तादाददानो मृतस्याऽस्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥ ९ ॥
उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥ १० ॥
उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना ।
माता पुत्रं यथा सिचाऽभ्येनं भूम ऊर्णुहि ॥ ११ ॥
उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणाः सन्त्वत्र ॥ १२ ॥
उत् ते स्तभ्नामि पृथिवीं त्वत् परीमं लोगं निदधन्मो अहं रिषम् ।
एतां स्थूणां पितरो धारयन्तु तेऽत्रा यमः सादना ते मिनोतु ॥ १३ ॥

प्रतीचीने मामहनीष्वाः पर्णमिवा दधुः ।
प्रतीचीं जग्रभा वाचमश्वं रशनया यथा[1] ॥ १४ ॥

ॐ एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ॥
तं युवं देवावश्विना कुमारं साहदेव्यम् । दीर्घायुषं कृणोतन[2] ॥

ॐ परावतो ये दिधिषन्त आप्यं मनुप्रीतासो जनिमा विवस्वतः ।
ययातेर्ये नहुष्यस्य बर्हिषि देवा आसते ते अधि ब्रुवन्तु नः ॥ १ ॥

विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि वः ।
ये स्थ जाता अदितेरद्भ्यस्परि ये पृथिव्यास्ते म इह श्रुता हवम् ॥ २ ॥

येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान् वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥ ३ ॥

नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ ४ ॥

सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् ।
ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये ॥ ५ ॥

को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यतिष्ठन ।
को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥ ६ ॥

येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्तहोतृभिः ।
त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ ७ ॥

य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः ।
ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥ ८ ॥

---

१. ऋसं. १०.१८. २. ऋसं. ४.१५.९-१०.

भरेष्विन्द्रं सुहवं हवामहेऽहोमुचं सुकृतं दैव्यं जनम् ।
अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥ ९ ॥
सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥ १० ॥
विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिहुतः ।
सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ॥ ११ ॥
अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः ।
आरे देवा द्वेषो अस्मद्युयोतनोरु णः शर्म यच्छता स्वस्तये ॥ १२ ॥
अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि ।
यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ॥ १३ ॥
यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हिते धने ।
प्रातर्यावाणं रथमिन्द्र सानसिमरिष्यन्तमा रुहेमा स्वस्तये ॥ १४ ॥
स्वस्ति नः पथ्यासु धन्वसु स्वस्त्य१प्सु वृजने स्वर्वति ।
स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥ १५ ॥
स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥ १६ ॥
एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन[1] ॥ १७ ॥

स्वादिष्ठया इति दश ऋचः पठेयुः ।

ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥

---

१. ऋसं. १०.६३.१-१७.

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥
येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूँषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिँश्चित्तँ सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु[1] ॥ ६ ॥

ग्रहमन्त्रैरभिषिञ्चेत् ॥

आ कृष्णेनेत्यस्य हिरण्यस्तूपः सविता त्रिष्टुप् ।

ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन्[2] ॥

आ प्यायस्वेत्यस्य गोतमः सोमो गायत्री ।

ॐ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे[3] ॥

अग्निर्मूर्धा इत्यस्य विरूपोऽङ्गारको गायत्री ।

ॐ अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति[4] ॥

---

१. वासं. (मा) ३४.१-६ २. ऋसं. १.३५.२. ३. ऋसं. १.९१.१६. ४. ऋसं. ८.४४.१६.

उद्बुध्यध्वमित्यस्य बुधो बुधस्त्रिष्टुप् ।

ॐ उद्बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीळाः ।
दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः[1] ॥

बृहस्पते इत्यस्य गृत्समदो बृहस्पतिस्त्रिष्टुप् ।

ॐ बृहस्पते अति यदर्यो अर्हाद् द्युमद् विभाति क्रतुमज्जनेषु ।
यद् दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्[2] ॥

शुक्र इत्यस्य पराशरः शुक्रो द्विपदा विराट् ।

ॐ शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ।
परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन्[3] ॥

शमग्निरित्यस्य इरिंबिठिः शनैश्चर उष्णिक् ।

ॐ शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः ।
शं वातो वात्वरपा अप स्रिधः[4] ॥

कया न इत्यस्य वामदेवो राहुर्गायत्री ।

ॐ कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता[5] ॥

केतुं कृण्वन्नित्यस्य मधुच्छन्दाः केतुर्गायत्री ।

ॐ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः[6] ॥

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥

---

१. ऋसं. १०.१०१.१. २. ऋसं २.२३.१५. ३. ऋसं. १.६९.१. ४. ऋसं. ८.१८.९. ५. ऋसं. ४.३१.१. ६. ऋसं. १.६.३.

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥

कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥

एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥

ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥

ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥

अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥

सरितः सागराः शैलास्तीर्थानि जलजा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥

तच्छंयोः इति शान्तिः ।

ॐ तच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे[1] ॥ इत्यभिषेकः ॥

## देवताविसर्जनम्

यजमानः नूतनवस्त्रगन्धपुष्पमालादीन् गृह्णीयात् । यदाबध्नन् इति मन्त्रेण कण्ठे सुवर्णमालां धारयेत् ।

ॐ यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः ।
तन्म आ बध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासत्[2] ॥

१. तैब्रा. ३.५.११.१. २. ऋ. खिल. ४.६.८.

यजमानः धृतनवशुक्लाम्बरगन्धमाल्योऽभिषेकवस्त्रमाचार्याय दत्त्वा अग्न्युपस्थापनाभिवादने कृत्वा विभूतिं धृत्वा आचार्येण **आ नो भद्रा**[1] इत्यादि-महाशान्तिमन्त्रजपपूर्वकं देवतोत्तरपूजने कृते पूर्वमन्त्रैः मार्कण्डेयादीन् प्रार्थयेत् । परिस्तरणविसर्जनपरिसमूहनपर्युक्षणाग्न्यर्चनपात्रोत्सर्जनान्तं कृत्वा होमं समाप्य आवाहितदेवताः विसर्जयेत् ॥

## आचार्यपूजनम्

तत आचार्यादीन् संपूज्य आचार्याय मार्कण्डेयप्रतिमासहितं कलशं गां च दत्त्वा ब्रह्मादिभ्यो गवादिदशदानानि महादानानि दुर्दानानि शतगुञ्जापरिमितं सुवर्णं च विभज्य दद्यात् । अशक्तौ शतसर्षपतोलितं वा । गवादीनां प्रत्यक्षदानासंभवे तन्मूल्यं देयम् । दश दानानि — गोभूतिलहिरण्याज्यवासोधान्यगुडानि च । रौप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ॥ अष्टदानानि— आमान्नोदकुम्भगोवस्त्र-भूम्यास्तरणच्छत्रासनानि ॥ उपदानानि — अन्नं चैवोदकुम्भं चोपानहौ च कमण्डलुः । छत्रं वस्त्रं तथा यष्टिं लोहदण्डं च दापयेत् ॥ अग्नीष्टिकां प्रदीपं च तिलांस्ताम्बूलमेव च । चन्दनं पुष्पमालां चोपदानानि चतुर्दश ॥ ततो विसर्जितग्रहपीठदानान्ते कांस्यपात्रे आज्यं विलोकयेत् ॥

**ॐ रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।**
**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश**[2] ॥

इति आज्यं निरीक्ष्य सदक्षिणं तत्पात्रं ब्राह्मणाय दद्यात् ॥

**ॐ याऽलक्ष्मीर्यच्च मे दौस्थ्यं सर्वाङ्गेषु व्यवस्थितम् ।**
**अवेक्षणाज्यदानेन विनाशयतु मे सदा ॥**

इति दत्त्वा आशिषो गृहीत्वा पुरन्ध्रीभिर्नीराजितो देवानभिवाद्य शतं विप्रान् संभोज्य भूयसीं दत्त्वा कर्म समाप्य सुहृद्युतो भुञ्जीत ॥

॥ ॐ तत्सत् ॥

॥ इत्युग्ररथशान्तिप्रयोगः समाप्तः ॥

---

१. ऋसं. १.८९.१. २. ऋसं. ६.४७.१८.

# यन्त्रान्तरम्

| अं | आं | इं | ईं | उं | ऊं | ऋं |
|---|---|---|---|---|---|---|
| जं | झं | ञं | टं | ठं | डं | ॠं |
| छं | भं | मं | यं | रं | ढं | ऌं |
| चं | बं | सं | ॐ हं ळं क्षं | लं | णं | ॡं |
| ङं | फं | षं | शं | वं | तं | एं |
| घं | पं | नं | धं | दं | थं | ऐं |
| गं | खं | कं | अः | अं | औं | ओं |

# परिशिष्टम् १

## ॥ अग्निजननम् ॥

ॐ श्रीगुरुगणपतिसरस्वतीभ्यो नमः । अमुककर्माङ्गभूतमग्निजननाख्यं कर्म करिष्ये । कलशार्चनशङ्खार्चनात्मार्चनानि च विधाय गुरुगणपती संपूज्य कुण्डसंस्कारादिकं वक्ष्यमाणप्रकारेण कुर्यात् । सुलक्षणयुक्तं कुण्डं मूलमन्त्रमुच्चारयन् संवीक्ष्य अस्त्रमन्त्रेण प्रोक्ष्य अस्त्रमन्त्रैर्दर्भैः संताड्य कवचेनाभ्युक्ष्य सिकता विकीर्य अस्त्रेण पुनः प्रोक्ष्य तत्र आग्नेयं यन्त्रं लिखेत् ॥

अनुष्ठानपद्धतौ ॥ त्रिकोणमध्ये ताराग्निमायाप्रणवप्रसादबीजानि विलिख्य बाह्यषट्कोणे मध्ये च अग्नेः सप्तजिह्वाबीजानि । तदन्तरालेषु चित्पिङ्गलमन्त्राक्षराणि । आग्नेयाद्यष्टदलेषु वैश्वानरमन्त्राक्षराणि । दलान्तरालेषु मूलमन्त्राक्षराणि । तद्बाह्ये ईशानादिकोणेषु अ आ इत्यादि चतुः चतुः स्वराक्षराणि । तद्बहिश्चतुरस्रसमन्ताद् ईशानादारभ्य ईशान्याम् ॐकारं ततः समन्तात् कादिक्षान्तान् वर्णांश्च विलिखेत् । एतदाग्नेययन्त्रम् ॥

यन्त्रान्तरमाह । पूर्वाग्रमुत्तराग्रं च लिखेद्रेखाष्टकं बुधः । भवत्येकोनपञ्चाशत्पदानि समिधोल्लिखेत् ॥ आदिहान्ता न्यसेत्तेषु मातृका ईशतः क्रमात् । मध्ये ळक्षैश्च तारं च तदंशान् मेखलात्रये ॥ पुरुषप्रकृती जीवप्राणौ मध्यपुटे न्यसेत् । प्रकृत्यादिचतुर्विंशदीशादीरितो न्यसेत् ॥ आत्मतत्त्वादिपञ्चैव न्यसेन्मध्यपुटे बुधः । विनृत्यादिकलापं च पञ्च मध्यपुटे न्यसेत् ॥ इत्युक्तप्रकारेणोल्लेखनम् ॥ उपरि मेखलायाम् **इदं विष्णुः** इति विष्णुं, मध्यमेखलायां **ब्रह्म जज्ञानम्**[1] इति ब्रह्माणम्, अधोमेखलायां **कद्रुद्राय**[2] इति रुद्रम्, योन्यां **गौरीर्मिमाय**[3] इति गौरीम् आवाह्य पूजयेत् ।

ततः एकविंशतिदर्भैः कृतकूर्चं मण्डलमध्ये आधारार्थं न्यस्य आधारशक्त्यादिपीठपूजां कृत्वा । नवशक्तिपूजा । **ॐ प्रजायै नमः ॥ विजयायै नमः ॥ अजितायै नमः ॥ अपराजितायै नमः ॥ नित्यायै नमः ॥ विलासिन्यै नमः ॥ दोग्ध्र्यै नमः ॥ अघोरायै नमः ॥ मङ्गलायै नमः ॥ ॐ नमो**

---

१. तैआ १०.१. २. ऋसं. १.४३.१. ३. ऋसं. १.१६४.४१.

**भगवते दिव्यसिंहासनाय नमः** ॥ इति पीठं संपूज्य **ॐ ह्रीं भुवनेश्वरि अत्रागच्छागच्छ आवाहिता भव** इत्यादिमुद्राः प्रदर्श्य । **ॐ वराहदंष्ट्राय विद्महे वज्रनखाय धीमहि । तन्नो भुवनेश्वरी प्रचोदयात्** ॥ इत्यर्घ्यम् ।

शक्तिर्ऋषिः गायत्री छन्दः श्रीभुवनेश्वरी देवता । ह्राम् इत्यादिषडङ्गन्यासः ।
**वराङ्कुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम् । बालार्ककोटिप्रतिभां त्रिनेत्रां भजेऽहमाद्यां भुवनेश्वरीं ताम्** ॥ इति ध्यानम् । **ॐ ह्रीं नमः** इति जपः । पञ्चोपचारैः संपूज्य । शिवमपि **ह्रौं** इति प्रासादबीजेनावाह्य । **वामायै नमः** इत्यादिनवशक्तयः ॥ **ॐ नमो भगवते सकलगुणात्मने शक्तियुक्ताय अनन्ताय योगपद्मपीठात्मने नमः । ॐ ह्रौं शिवात्रागच्छागच्छ ।** आवाहनादिमुद्राः प्रदर्श्य । **ॐ तत्पुरुषाय विद्महे**[1] इत्यर्घ्यम् । वामदेव ऋषिः पङ्क्तिश्छन्दः सदाशिवो देवता हाम् इत्यादि षडङ्गानि । ध्यानम्—

**मुक्तापीतपयोदमौक्तिकजपावर्णैर्मुखैः पञ्चभि-**
**स्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् ।**
**शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टांकुशान्**
**पाशाभीतिवरान् दधानममिताकल्पोज्ज्वलं चिन्तये ॥**

इति ध्यात्वा । **ॐ ह्रौं** इति जपः । पञ्चोपचारैः संपूज्य ॥

**ततोऽनुरक्तौ मदमत्तचित्तौ भिन्नाङ्गरागौ परिरम्भिताङ्गौ ।**
**आरूढयन्तौ मदमुद्वहन्तौ स्मरेत् स्मराङ्गौ गिरिजागिरीशौ ॥**

इति ध्यात्वा षोडशोपचारैः संपूज्य । शिवरेतःपतनं विभाव्य आग्नेयास्त्रं यथाशक्ति जपेत् । आग्नेयास्त्रं प्रवक्ष्यामि मन्त्रं सर्वार्थसिद्धिदम् । श्रीकाश्यपो मुनिः प्रोक्त आग्नेयास्त्रमहामनोः ॥ त्रिष्टुप् छन्दो देवता च जातवेदाग्निरीरितः । नवभिः सप्तभिः षड्भिः षड्भिश्च पुनरष्टभिः ॥ सप्तभिर्मूलमन्त्रार्णैः षडङ्गविधिरीरितः ॥ अस्य श्रीआग्नेयास्त्रमन्त्रस्य काश्यप ऋषिः त्रिष्टुप् छन्दः जातवेदा अग्निर्देवता । सर्वार्थसिद्धये जपे विनियोगः ॥

**जातवेदसे सुनवाम हृदयाय नमः ॥ सोममरातीयतो शिरसे स्वाहा ॥ निदहाति वेदः शिखायै वषट् ॥ स नः पर्षदति कवचाय हुम् ॥**

---

१. तैआ. १०.१.

दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ॥ सिन्धुं दुरितात्यग्निः अस्त्राय फट् ॥ अथ ध्यानम्—

अंसासक्तसुवर्णमाल्यमरुणं स्रक्चन्दनालङ्कृतं
ज्वालापिच्छजटाकलापविलसन्मौलिं सशुक्राङ्कुशम् ।
शक्तिस्वस्तिकदर्भमुष्टिविलसच्छ्रक्स्रुक्स्रुवाभिर्वरं
दोर्भिर्बिभ्रतमाश्रितं त्रिनयनं रक्ताभमग्निं भजे ॥

इति ध्यात्वा । ॐ जातवेदसे०[1] इति यथाशक्ति जपेत् ॥

श्रोत्रियागारात् स्वगृहाद्वा सुवासिन्याहृतं मृण्मयादिपात्रसंपुटितमग्निं देवस्य त्वा० इति आग्नेय्यां निधाय अस्त्रमन्त्रेण क्रव्यादांशं नैर्ऋत्यां दर्भैर्निरस्य आग्नेयास्त्रेण प्रोक्ष्य दक्षिणदृष्ट्या नेत्रमन्त्रेण संवीक्ष्य । वाय्वग्न्यमृतबीजैः ( यं रं वं ३ ) शोषणदहनप्लावनानि कुर्यात् ॥ तारेण दर्भैः प्रज्वाल्य नैर्ऋत्यां निरस्य धेनुमुद्रां प्रदर्श्य अस्त्रमन्त्रेण प्रोक्ष्य नेत्रेणावगुण्ठ्य मूलेनाभ्यर्च्य जानुभ्यामवनिं गत्वा कुण्डस्य कूर्चग्रन्थिं विस्रस्य ॐ एह्यग्ने०[2] इति पात्रस्थमग्निमादाय वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा । इति कुण्डोपरि त्रिः परिभ्रामयन् ॐ जुष्टो दमूना०[3] । रं वह्निचैतन्याय नमः । शिववीर्यात्मकमग्निं प्रतिष्ठापयामीति भावयन् कुण्डे भूर्भुवः स्वरोम् इति स्वाभिमुखं प्रतिष्ठाप्य ॥ इन्धे राजा इति मन्त्रस्य वसिष्ठ ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता । इन्धनप्रक्षेपे विनियोगः । ॐ इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन । नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि[4] ॥ चित्पिङ्गलेत्यस्य मन्त्रस्य सान्दीपी ऋषिः गायत्री छन्दः ज्वलनाग्निर्देवता । अग्निप्रज्वालने विनियोगः । ॐ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा ॥ इति प्रज्वाल्य ॐ उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम । पशूँश्च मह्यमावह जीवनं च दिशो दश[5] ॥ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥ इत्युपस्थाय ।

---

१. ऋसं. १.९९.१. २. ऋसं १.७६.२. ३. ऋसं. ५.४.५.
४. ऋसं. ७.८.१. ५. तैआ. १०.१.४.

वैश्वानरमन्त्रस्य भृगुर्ऋषिः गायत्री छन्दः वैश्वानरो देवता रां बीजं रीं शक्तिः रूं कीलकम् । अग्निप्रीत्यर्थे न्यासे विनियोगः ॥

सप्त जिह्वान्यासः — सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् । सर्वाङ्गेषु च विन्यस्य यथावद्देशिकोत्तमः ॥

**रुयूं हिरण्यायै नमः** (लिङ्गे) ॥ **ह्यूं गगनायै नमः** (गुदे) ॥ **श्र्यूं रक्तायै नमः** (मूर्ध्नि) ॥ **व्यूं कृष्णायै नमः** (आस्ये) ॥ **ल्र्यूं सुप्रभायै नमः** (नासिकायाम्) ॥ **र्र्यूं बहुरूपायै नमः** (नेत्रयोः) ॥ **र्यूं अतिरिक्तायै नमः** (सर्वाङ्गे न्यसामि) ॥

षडङ्गन्यासाः — **रां सहस्रार्चिषे हृदयाय नमः** ॥ **रीं स्वस्तिपूर्णाय शिरसे स्वाहा** ॥ **रूं उत्तिष्ठपुरुषाय शिखायै वषट्** ॥ **रैं धूम्रव्यापिने कवचाय हुम्** ॥ **रौं सप्तजिह्वात्मने नेत्रत्रयाय वौषट्** ॥ **रः धनुर्धराय अस्त्राय फट्** ॥

मूर्तिन्यासाः — मूर्ध्नि वामांसके पार्श्वे कटौ लिङ्गे कटौ पुनः । दक्षपार्श्वांसके न्यस्य मूर्तिरष्टौ विभावसोः ॥ **अग्नये जातवेदसे नमः** (मूर्ध्नि) ॥ **अग्नये सप्तजिह्वाय नमः** (वामांसे) ॥ **अग्नये हव्यवाहनाय नमः** (वामपार्श्वे) ॥ **अग्नये अश्वोदराय नमः** (वामकट्याम्) ॥ **अग्नये वैश्वानराय नमः** (लिङ्गे ॥ **अग्नये कौमारतेजसे नमः** (दक्षिणकट्याम्) ॥ **अग्नये विश्वमुखाय नमः** (दक्षिणपार्श्वे) ॥ **अग्नये देवमुखाय नमः** (दक्षिणांसे) ॥

ततो न्यसेत् निजे देहे पीठं हाटकरेतसः ।

अथ पीठदेवताः — **मं मण्डूकाय नमः** ॥ **कं कालाग्निरुद्राय नमः** ॥ **आं आधारशक्त्यै नमः** ॥ **कूर्माय नमः** ॥ **पृथिव्यै नमः** ॥ **अमृतार्णवाय नमः** ॥ **श्वेतद्वीपाय नमः** ॥ **कल्पवृक्षाय नमः** ॥ **मणिमण्डपाय नमः** ॥ **हेमसिंहासनाय नमः** ॥ **धर्माय नमः** ॥ **ज्ञानाय नमः** ॥ **वैराग्याय नमः** ॥ **ऐश्वर्याय नमः** ॥ **अधर्माय नमः** ॥ **अज्ञानाय नमः** ॥ **अवैराग्याय नमः** ॥ **अनैश्वर्याय नमः** ॥ **मध्ये अनन्ताय नमः** ॥ **तत्त्वपद्माय नमः** ॥ **आनन्दकन्दाय नमः** ॥ **संविन्नालाय नमः** ॥ **विं विकारमयकेसरेभ्यो नमः** ॥ **प्रकृत्यात्मकपत्रेभ्यो नमः** ॥ **पञ्चाशद्वर्णकर्णिकायै नमः** ॥ **अं अर्कमण्डलाय अर्थप्रदद्वादशकलात्मने नमः** ॥ **उं सोममण्डलाय कामप्रदषोडशकलात्मने नमः** ॥ **मं वह्निमण्डलाय धर्मप्रददशकलात्मने नमः** ॥ स्वर्णपीठं कल्पयामि ॥

नव शक्तयः — **ॐ पीतायै नमः ॥ श्वेतायै नमः ॥ अरुणायै नमः ॥ कृष्णायै नमः ॥ धूम्रायै नमः ॥ तीव्रायै नमः ॥ विस्फुलिङ्गिन्यै नमः ॥ रुचिरायै नमः ॥ ज्वालिन्यै नमः ॥ ॐ रं वह्न्यासनाय नमः ॥**

ध्यानम् — **त्रिनयनमरुणाभं बद्धमौलिं सुशुक्लांशुकमरुणमनेकाकल्पमम्भोजसंस्थम् । अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं नमत कनकमालालङ्कृतांसं कृशानुम्** ॥ इति ध्यात्वा ।

लं पृथिव्यादिपञ्चोपचारैः संपूज्य ॥ **ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा** ॥ इति यथाशक्ति संजप्य जपं समर्प्य ॥ इत्यन्तर्यागं विधाय बहिर्यागमारभेत् ॥ अग्निं परिसमूह्य कुण्डं स्थण्डिलं वा प्रागुदगग्रैर्दर्भैः परिस्तीर्य वह्नौ पूर्वोदितमण्डूकादि अग्निमण्डलपर्यन्तं पीठमभ्यर्च्य नवशक्त्यादि स्वहृदोऽनलमावाह्य पुष्पान्तमभ्यर्च्य आवरणपूजां करिष्ये ॥ षट्सु कोणेषु मध्ये च जिह्वानां देवता यजेत् । ईशानादिषु वाय्वन्तकोणेषु षट् समर्चयेत् ॥ हिरण्याद्यतिरिक्तान्ता मध्ये तु बहुरूपिणीम् । केसरेष्वङ्गपूजा स्याद्दलेष्वष्टसु मूर्तयः ॥ मातरोऽष्टौ दलान्तेषु भैरवाः स्युस्तदग्रतः । धरापुरे तु शक्राद्या वज्राद्यायुधसंयुताः ॥ एवमावरणैर्युक्तं सप्तभिः पावकं यजेत् । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डा सप्तमी तथा । अष्टमी स्यान्महालक्ष्मीः प्रोक्ताः स्युर्विश्वमातरः ॥ असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः । कपाली भीषणश्चैव संहारश्चाष्टभैरवाः ॥

अथ पात्रासादनम् — कुण्डस्योत्तरभागे पात्रासादनार्थं दर्भानास्तीर्य । प्रणीताप्रोक्षणीपात्रे आज्यस्थालीं स्रुवं स्रुचम् । अधोमुखानि चैतानि होमद्रव्यं घृतं कुशान् ॥ इत्यासाद्य । हस्ते पवित्रद्वयं गृहीत्वा शुभाम्भसा पूर्वासादितद्रव्याणि पात्राणि च मूलेन प्रोक्ष्य प्रोक्षणीपात्रमुत्तानीकृत्य जलेनापूर्य **'गङ्गे च यमुने चैव'** इति तीर्थाणुना अङ्कुशमुद्रया तत्र तीर्थान्यावाहयेत् । पवित्रे अक्षतगन्धपुष्पाणि क्षिप्त्वा पवित्राभ्याम् उत्पवनं चरेत् इति ॥ मतान्तरम् — प्रोक्षणीस्रुवमासाद्य प्रणीतां चाज्यभाजनम् । इध्मं बर्हिरयं प्रोक्तो ह्याज्यहोमेष्वनुक्रमः ॥ स्थालिं चरोः प्रोक्षणिभाजनं च दर्विस्रुवौ सादय दर्विहोमे । पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमवित्कुशांश्च ॥ इत्यष्टपात्राणि ॥ प्रणीता प्रोक्षणी आज्यपात्रं चरुस्थाली स्रुक्स्रुवौ च अधोमुखान्यासाद्य

अस्त्रेण त्रिः प्रोक्ष्य प्रोक्षणीमुध्दृत्य प्रोक्षण्यां कूर्चौ निधाय। **आपः पुनन्तु॰**[1] इति धेनुमुद्रया जलमापूर्य। तारेण गन्धादिभिरभ्यर्च्य। ताभिरद्भिरितराणि पात्राणि त्रिः प्रोक्ष्य। ता अपः किञ्चित् कमण्डलौ निक्षिपेदित्येके। पात्राण्युत्तानानि कृत्वा इध्मं च विस्रस्य दक्षिणे कूर्चोपरि **ॐ नमो ब्रह्मणे** इति ब्रह्मासनं दत्त्वा उत्तरे अर्वावसुं गन्धपुष्पैः संपूज्य ब्रह्मणः पुरस्तात्प्रणीतापात्रं निधाय। ब्रह्मबीजेन उदकमापूर्य। **आयातु वरुणः शीघ्रं प्राणिनां प्राणरक्षकः। अतुल्यबलवानत्र सर्वदुष्टप्रशान्तये** ॥ इति वरुणमावाह्य ब्रह्माणमभ्यर्च्य ब्रह्मानुज्ञया प्रणीतां नासान्तमुध्दृत्य धनेशेश्वरयोर्मध्ये संस्थाप्य सतदर्भैराच्छाद्य अष्टवारं मूलेनाभिमन्त्र्य प्रोक्षणीजलेनाज्यपात्रं प्रोक्ष्य मूलमन्त्रेण घृतमापूर्य नेत्रमन्त्रेण वीक्ष्य वायव्यां दिशि अङ्गारोपरि आज्यपात्रं संस्थाप्य हृन्मन्त्रेण प्रताप्य दर्भद्वयं कवचमन्त्रेण संदीप्य त्रिवारं नीराज्य आज्यस्योत्पवनं कुर्यात् ॥ **ॐ सवितुश्त्वा प्रसव॰**[2] **स्कन्दाय स्वाहा** ॥ वायव्यां बर्हिषि आज्यपात्रं संस्थाप्य **अग्नये त्वा जुष्टं निर्वपामि** इति तण्डुलान् निरुप्य **प्रोक्षामि** इति प्रोक्ष्य चरुं श्रपयित्वा दर्भैः प्रज्वाल्य त्रिवारं नीराज्य तस्मिन् शमयेत् ॥

अथादाय स्रुवौ इति स्रुक्स्रुवसंस्कारौ कुर्यात्। चरुं घृतेनाभिघार्य उदगुद्वास्य अग्न्याज्ययोर्मध्यत आनीय बर्हिष्यादाय आज्ये पवित्रं ग्रन्थियुतं पूर्वाग्रं मध्ये संस्थाप्य तत्र उत्तराज्यभागम् इडानाडीयं दक्षिणाज्यभागं पिङ्गलनाड्यात्मकम् आज्यमध्यभागं सुषुम्नानाड्यात्मकं विभाव्य चक्षुषी होष्ये। **ॐ उत्तरे अग्नये स्वाहा** इति दक्षिणभागीयाज्येन जुहुयात्। **ॐ दक्षिणे सोमाय स्वाहा** इति उत्तरभागीयाज्येन जुहुयात्। **ॐ मध्ये अग्नीषोमाभ्यां स्वाहा** इति आज्यमध्यभागेन सुषुम्नात्मकेन तृतीयनेत्रार्थं जुहुयात् ॥ **ॐ भूरग्नये च॰**[3]।

इति महाव्याहृतीभिर्जुहुयात्। **ॐ भूर्भुवः स्वः स्वाहा। वैश्वानर जातवेद॰ सर्वकर्माणि साधय स्वाहा** ॥ इति त्रिवारं जुहुयात् ॥

यज्ञेश्वरप्रीत्यर्थं षोडशसंस्कारान् करिष्ये ॥ समस्तव्याहृतिभिरष्टवारं पूर्वाज्यं हुत्वा ॥ **ॐ अग्नये गर्भाधानाख्यं कर्म संपादयामि स्वाहा** इत्येकां घृताक्तां समिधं हुत्वा समस्तव्याहृतिभिरष्टवारम् अपराज्यं हुत्वा स्रुवेणाज्यं चतुर्वारं स्रुचि

---

१. तैआ. १०.२३. २. आश्व. गृसू १.३.३. ३. तैआ. १०.४.१.

निधाय स्रुवेण संपुटीकृत्य हस्ताभ्यां गृहीत्वा स्तनान्तमुद्धृत्य **रां वौषट् स्वाहा** इति संपत्त्यर्थं पूर्णां जुहुयात् ॥ स्रुवेणाज्यं चतुर्वारं निधाय स्रुचि तां सुधीः । अपिधाय स्रुवेणैतौ गृह्णीयात् करयुग्मतः ॥ वामस्तनान्ततन्मूलं कृत्वाऽग्निं मनुना सुधीः । जुहुयाद्वौषडन्तेन संपत्त्यर्थमतन्द्रितः ॥ इति पूर्णाहुतिः ॥ १ ॥ एवं गर्भाधानवत् समस्तव्याहृतिभिरष्टवारं पूर्वाज्यं हुत्वा **ॐ अग्नये पुंसवनाख्यं कर्म संपादयामि** इत्येकां समिधम् अष्टवारं पूर्ववदपराज्यं पूर्ववत् । पूर्णाहुतिं च जुहुयात् ॥ २ ॥ **अग्नये सीमन्तोन्नयनाख्यं कर्म संपादयामि** इति पूर्वाज्यानन्तरम् एकां समिधमपराज्यं पूर्णां च जुहुयात् ॥ ३ ॥ पूर्वाज्यमष्टवारं **ॐ अग्नये जातकर्माख्यं कर्म संपादयामि** इति समिधमपराज्यं पूर्णाहुतिं च जुहुयात् ॥ ४ ॥ अग्निं पुण्याहोदकेन प्रोक्ष्य पूर्वाज्यम् **ॐ अग्नये नामकरणाख्यं कर्म संपादयामि** इति समिधम् अपराज्यं पूर्णाहुतिं च जुहुयात् ॥ ५ ॥ **निष्क्रमणम्** ॥६॥ **अन्नप्राशनम्** ॥ ७ ॥ **चौलम्** ॥ ८ ॥ **उपनयनम्** ॥ ९ ॥ **महानाम्नीम्** ॥१०॥ **महाव्रताख्यम्** ॥ ११ ॥ **उपनिषदाख्यम्** ॥ १२ ॥ **गोदानाख्यम्** ॥ १३ ॥ **समावर्तनाख्यम्** ॥१४॥ **विवाहाख्यम्** ॥१५॥ **वितानवह्निकरणाख्यम्** ॥१६॥ **कर्म संपादयामि** इति पूर्वाज्याष्टौ हुत्वाऽनन्तरम् एकां समिधमष्टौ अपराज्यं पूर्णाहुतिं च जुहुयात् ॥ इति षोडशकर्माणि ॥

पूर्वोक्तैरग्नेः सप्तजिह्वामन्त्रषडङ्गमन्त्र-अष्टमूर्तिमन्त्र-ब्राह्म्याद्यष्ट-असिताङ्गाद्यष्ट-भैरवांश्च इन्द्रादि वज्रादि एकैकया आज्याहुत्या जुहुयात् ॥ महागणेशमन्त्रेण व्यस्तेन दशधा पुनः । जुहुयाच्च समस्तेन चतुर्वारं घृताहुतीः ॥ पूर्वं पूर्वयुतं बीजषट्कं बाणाँश्च सायकाः । मुनयो मार्गणाश्चेति विभागस्तन्मनोः स्मृतः ॥ तारो लक्ष्मीर्गिरिसुता कामो भूर्गणनायकः । चतुर्थ्यन्तो गणपतिर्वरान्ते वरदेति च ॥ सर्वान्ते जनमित्युक्त्वा मेवशान्ते तु मानय । स्वाहान्ते इन्द्रयुग्मार्णो महागणपतेर्मनुः ॥ अनेन दशाहुतीः समस्तेन मन्त्रेण चतुराहुतीश्च जुहुयात् ।

**ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा ॥**

**इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्कृतं यदुक्तं यत्स्मृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा** ॥ एतेन ब्रह्मार्पणमन्त्रेण चतुर्वारं हुत्वा व्याहृतिभिराज्यं जुहुयात् ॥

॥ इति अग्निजननप्रयोगः ॥

## परिशिष्टम् २

### ग्रन्थान्तरेभ्य उद्धृता उग्ररथशान्तिप्रयोगाः

---

#### ॥ बौधायनीया उग्ररथशान्तिः ॥

[ बौधायनीयगृह्यशेषसूत्रे पञ्चमप्रश्ने अष्टमोऽध्यायः ]

अथात उग्ररथशान्तिविधिं व्याख्यास्यामः । ब्राह्मणराजन्यवैश्यानां जन्मदिनादारभ्य षष्टितमसंवत्सरे जन्ममासे जन्मनक्षत्रे गोमयेन गोचर्ममात्रं चतुरश्रस्थण्डिलं कृत्वा तस्याग्नेयदिग्भागे निष्कद्वयेन मृत्युप्रतिमां कृत्वा धान्यानामुपरि यथाविधि कलशस्थापनं कृत्वा कलशस्योपरि प्रतिमां पूजयेत् । 'अपैतु मृत्युः,' 'परं मृत्यो,' 'मा नस्तोके,' 'त्रियम्बकम्' इत्यष्टोत्तरशतवारं जपित्वाऽथ देवयजनोल्लेखनप्रभृत्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति द्विरवदानम् । 'मा नो महान्तम्' इति पुरोनुवाक्यामनूच्य 'मा नस्तोके' इति याज्यया जुहोति ॥ १ ॥ अथाज्याहुतीरुपजुहोति – घृतसूक्तेन प्रत्यृचम् ॥ २ ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ ३ ॥ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति ॥ ४ ॥ अपरेणाग्निं प्राङ्मुख उपविश्य मृत्युसूक्तायुष्यसूक्तपुराणमन्त्रैः कलशोदकेनात्मानमभिषिच्याऽऽचार्यं संपूज्य ऋत्विग्भ्यो यथाशक्ति दक्षिणां दत्त्वा ब्राह्मणान् भोजयेदित्याह भगवान् बोधायनः ॥

---

#### ॥ वैखानसगृह्यसूत्रोक्ता शान्तिः ॥

[ वैखानसगृह्यसूत्रे तृतीयप्रश्न एकविंशी कण्डिका ]

तदेवं वर्तमानस्य यद्यष्टमासाधिकाशीतिवर्षाणि रविवर्षेणाधिगान्यधिगच्छेयुः स दृष्टसहस्रचन्द्रो भवति । तमेनं क्रियायुक्तं पुण्यकृत्तमं ब्रह्मशरीरमित्याचक्षते । तस्मान्नान्दीमुखं कृत्वा शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे पूर्ववद्धुत्वा[1] तथैव कपिल इवेति

---

१. आघारं हुत्वा तदधिदेवता नक्षत्राणि च जुहुयादग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशीर्षाय रुद्रायार्द्रायां अदित्यै पुनर्वसूभ्यां बृहस्पतये तिष्याय सर्पेभ्य आश्रेषाभ्यः पितृभ्यो मघाभ्योऽर्यम्णे फल्गुनीभ्यां भगाय फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे निष्ट्याया इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानूराधेभ्य इन्द्राय ज्येष्ठायै प्रजापतये मूलायाद्भ्योऽषाढाभ्यो विश्वेभ्यो देवेभ्योऽषाढाभ्यो ब्रह्मणेऽभिजिते विष्णवे श्रोणायै वसुभ्यः श्रविष्ठाभ्यो वरुणाय शतभिषजेऽजायैकपदे प्रोष्ठपदेभ्योऽहये बुध्नियाय प्रोष्ठपदेभ्यः पूष्णे रेवत्या अश्विभ्यां अश्वयुग्भ्यां यमायापभरणीभ्यः स्वाहेति व्याहृतिः ॥

वृद्धस्य वृद्धाया वा वदनाक्षतोदकादीन् मूर्ध्न्याद्‌ध्यात् । सर्वदेवताः सहस्रं च ब्राह्मणानामर्चनबलिभ्यामन्नेन तर्पयेत् । ग्रामं प्रदक्षिणीकृत्य सायं स्थण्डिले सहस्रं पिष्टेन सोमरूपाणि करोति । राजतेन पात्रेण कुमुदपत्रैः सोमस्यार्चनम् । तस्य दक्षिणे रोहिणीगणं वामे चानात्रृषिगणमर्च्चयति । सहस्रशः सुवर्णरजतमुक्तादीनि शक्त्या वस्त्रतण्डुलापूपानि च दद्यात् ॥

---

## ॥ ऋग्वेदब्रह्मकर्मसमुच्चयान्तर्गता षष्टितमाब्दे उग्ररथशान्तिः ॥

श्रीः ॥ कर्ता षष्टितमवर्षारम्भदिने तद्वर्षान्तर्गतजन्मर्क्षे वा शुभे काले चंद्र-ताराबलान्विते मंगलस्नानं विधाय कृतनित्यक्रियो विप्रानामन्त्र्य तेभ्योऽनुज्ञां प्राप्य द्विराचमनादिदेशकालनिर्देशान्ते मम जन्मनः सकाशात् षष्टितमवर्षप्राप्त्या भाविष्य-त्त्वेन सूचितानां अपमृत्युदुःस्वप्नदर्शनमातापितृमृतिभार्यापुत्रवियोगग्रहपीडा-राजभयविविधरोगच्छायाविकृतिस्फुटनक्षत्रध्रुवाद्यदर्शनयक्षरक्षोभूतप्रेतपिशाचादिवि-विधदर्शनानामन्येषां च महोत्पातानाम् अरिष्टरूपाणां सद्यःपरिहारपूर्वकं सर्वारिष्ट-विनाशदीर्घायुरारोग्यसर्वसंपद्भवनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां शौनकोक्ताम् उग्ररथशान्तिं करिष्ये इति संकल्प्य गणेशपूजनादिनांदीश्राद्धान्ते आचार्यं ब्रह्माणमृत्विजश्च वृणुयात् ॥ तत आचार्य आचमनादिप्रादेशकरणान्ते ग्रहस्थापनादि कलशप्रार्थनान्तं कृत्वा तन्नैर्ऋत्यां स्थण्डिलेऽग्निं प्रतिष्ठाप्य ध्यात्वान्वादध्यात् ॥ ग्रहकीर्तनान्ते मार्कण्डेयं प्रधानदेवं समिदाज्यचरुदूर्वापायसैः प्रतिद्रव्यं १००८ वा १०८ आहुतिभिः मृत्युञ्जयं दूर्वातिलैः प्रतिद्रव्यं २५००।१५००।२०० यद्वा तिलमिश्रदूर्वाभिरुक्तसंख्यातो द्विगुणाभिः अश्वत्थामानं बलिं व्यासं हनूमन्तं बिभीषणं कृपं परशुरामं च एतान् लाजद्रव्येण प्रत्येकं २८ वा ८ शेषेणेत्यादि-समिदाधानान्ते ग्रहाणामुत्तरतः मही द्यौरित्यादिविधिना कलशं संस्थाप्य पूर्णपात्र-निधानान्ते पलेन तदर्धार्धेन वा सुवर्णप्रतिमायां मार्कण्डेयं नाममन्त्रेणावाह्य वस्त्रयुग्मे-नावेष्ट्य षोडशोपचारैः संपूज्येध्माबर्हिषोः संनहनाद्याज्यभागान्तं कृत्वा यजमानेन त्यागे कृते ग्रहादि होमोत्तरम् ।

**मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।**
**आयुरारोग्यमैश्वर्यं देहि मे मुनिपुङ्गव** स्वाहा ॥

इति मन्त्रेण समिदाज्यचरुदूर्वापायसान् **त्र्यंबकम्०** इति मन्त्रेण दूर्वातिलान् तिलमिश्रदूर्वा वा हुत्वा अश्वत्थाम्ने स्वाहा बलये० व्यासाय० हनूमते० विभीषणाय०

कृपाय० परशुरामाय स्वाहेति मंत्रैः प्रत्येकं २८।८ वा लाजान् जुहुयात् । ततः श्रीसूक्तं रुद्राध्यायं च जप्त्वाऽऽयुष्यमन्त्रान् जपेत् ॥ ते च ॥ एष वां देवाविति द्वयोर्वामदेवोऽश्विनौ गायत्री । परावतो य इति सप्तदशर्चस्य सूक्तस्य गयो विश्वे देवा जगत्यंत्ये त्रिष्टुभौ ॥ जपे वि० ॥ "आ नो भद्रा" इति आयुष्यसूक्तम् ॥ ततः पुरुषसूक्तं जपित्वा वेदपारायणं कार्यम् तदसंभवे 'अग्निमीळे' इति सूक्तजपः ॥ ततः स्विष्टकृदादिप्रायश्चित्तहोमान्ते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकैः सकुटुंबं बंधुवर्गयुतं यजमानमभिषिंचेत् ॥ तत्र मंत्राः ॥ शं न इन्द्राग्नी इति पंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वे देवास्त्रिष्टुप् ॥ सहस्रशीर्षेति षोळशर्चस्य० परं मृत्यो इति चतुर्दशर्चस्य सूक्तस्य संकुसुको विश्वे देवास्त्रिष्टुप् एकादशी प्रस्तारपंक्तिस्त्रयोदशी जगती चतुर्दश्यनुष्टुप् ॥ एष वां देवाविति द्वयोः० परावतो य इति सप्तदशर्चस्य० स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छंदा पवमानः सोमो गायत्री । यज्जाग्रत इति षण्णां प्रजापतिर्मनस्त्रिष्टुप् ॥ अभिषेके विनियोगः । ततो ग्रहमन्त्रैः सुरास्त्वामित्यादिभिः तच्छंयोरित्यनेन चाभिषिक्तो यजमानो धृतशुक्लाम्बरगन्धमाल्योऽभिषेकवस्त्रमाचार्याय दत्त्वा विभूतिं धृत्वा आचार्येण "आ नो भद्रा" इत्यादि महाशांतिमन्त्रजपपूर्वकं देवतोत्तरपूजने कृते मार्कण्डेयादीन् प्रार्थयेत् ॥ मार्कण्डेय महाभाग० ॥

द्रौणे मे त्वं महाभाग रुद्रतेजःसमुद्भव ।
आयुर्बलं यशो देहि अश्वत्थामन्नमोस्तु ते ॥
दैत्येन्द्रकुलसंभूत यज्ञदानक्रियारत ।
बले त्वां शरणं यामि दीर्घमायुः प्रयच्छ मे ॥
वसिष्ठकुलसंभूत वेदशास्त्रविशारद ।
नारायणांशसंभूत वेदव्यास नमोस्तु ते ॥
अंजनागर्भसंभूत कपींद्र सचिवोत्तम ।
रामप्रिय नमस्तुभ्यं हनुमन् रक्ष मां सदा ॥
बिभीषण नमस्तुभ्यं रामपादाब्जपूजक ।
आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनंदन ॥
द्विजेन्द्र भरताचार्य सर्वविद्याविशारद ।
शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥
रेणुकेय महावीर्य कार्तवीर्य कृतांतक ।
आयुः प्रयच्छ मे राम जामदग्न्य नमोस्तु ते ॥

तत आचार्यादीन् संपूज्य आचार्याय मार्कण्डेयप्रतिमासहितं कलशं गां च दत्त्वा ब्रह्मादिभ्यो गवादिदशदानानि शतगुंजापरिमितं सुवर्णं च विभज्य दद्यात् ।। अशक्तौ शतसर्षपतोलितं वा ।। गवादीनां प्रत्यक्षदानासंभवे तन्मूल्यं देयम् ।। ततो विसर्जितग्रहपीठदानान्ते कांस्यपात्रे आज्यं विलोक्य सदक्षिणं तत्पात्रं ब्राह्मणाय दत्त्वा तिलदानं च कृत्वा आशिषो गृहीत्वा नववस्त्रं धृत्वा पुरंध्रीभिर्नीराजितो देवानभिवाद्य शतविप्रान् संभोज्य भूयसीं दत्त्वा कर्म समाप्य सुहृद्युतो भुञ्जीत ।। इति षष्ठितमाब्दे उग्ररथशान्तिः ।।

---

## शान्तिकमलाकरे उग्ररथशान्तिः

अथोग्ररथशान्त्याख्या षष्टितमाब्दशान्तिः संगृह्यते ।।

शौनकः—

अथातः संप्रवक्ष्यामि शान्तिं चोग्ररथस्य तु ।
ब्रह्मक्षत्रियवैश्यानां शूद्राणां चैव योषिताम् ।।
यदि स्यात् षष्टिवर्षे तु तदा मृत्युर्भवेद् ध्रुवम् ।
दुःस्वप्नानि च जायन्ते मातापित्रोर्मृतिस्तदा ।।
भार्यापुत्रवियोगश्च रोगव्याधिभयं तथा ।
ग्रहपीडा राजभयं रोगाश्च विविधाश्च ये ।।
दन्तरोगा दृष्टिमान्द्यं छायाया विकृतिस्तथा ।
नक्षत्राणि न दृश्यन्ते ध्रुवादीनि स्फुटान्यपि ।।
भूतप्रेतपिशाचाद्या दृश्यन्ते विविधाश्च ये ।
एते चान्ये महोत्पाता जायन्ते षष्टिवत्सरे ।।
तद्रिष्टपरिहारार्थं शान्तिं वक्ष्यामि शौनकः ।
लोभादनादरो यस्तु शान्तिकर्म न कारयेत् ।।
तस्मिन् वर्षे भवेन्मृत्युः सत्यमेव न संशयः ।
तस्मिन् वर्षे जन्मदिने जन्मर्क्षे वा यदा भवेत् ।।
तस्मिन् दिने तु संप्राप्ते मंगलस्नानमाचरेत् ।
दैवज्ञोक्ते शुभे काले चन्द्रताराबलान्विते ।।

नित्यकर्माणि निर्वर्त्य ब्राह्मणानभिमन्त्र्य च ।
( अभिमंत्रणमामन्त्रणमनुज्ञापनं वा )
आचार्यं वरयेदादौ वेदवेदांगपारगम् ॥
आचारवन्तं धर्मज्ञं शान्तिकर्मणि कोविदम् ।
कामक्रोधविहीनं च रागद्वेषविवर्जितम् ॥
गणेशं पूजयेदादौ ततः पुण्याहवाचनम् ।
मातृकाः पूजयित्वा तु नान्दीश्राद्धमतःपरम् ॥
आचार्यब्रह्मवरणमन्वाधानमतः परम् ।
सर्वौषधीः समानीय पञ्चत्वक् पञ्चपल्लवम् ॥
पञ्चरत्नं पञ्चगव्यं ततः पञ्चामृतं क्षिपेत् ।
कलशे च समानीय ग्रहातिथ्यपुरःसरम् ॥
नवग्रहं समाराध्य मार्कण्डेयं प्रधानकम् ।
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥
मार्कंडेयस्य प्रतिमां कारयेच्च प्रयत्नतः ।
प्रतिमां स्थापयेत् कुम्भे वस्त्रयुग्मेन वेष्टयेत् ॥
उपचारैः षोडशभिः संपूज्य च विधानतः ।

( अत्र चकारेण होमे वक्ष्यमाणानां मृत्युंजयाश्वत्थामाद्युपदेवानां पूजा कार्या । गोमुखप्रसवे यक्ष्महपूजावदिति कश्चित् । वस्तुतस्तु तत्र प्रतिमां च विधानत इतिवदत्र विशेषवचनाभावात् मूलशान्तावपूजितानामपि देवतानां होमस्य सर्वसंमतत्वाच्च नात्र तेषां पूजनमपेक्षितमिति बोध्यम् । )

समिदाज्यचरुद्रव्यैर्दूर्वाभिः परमान्नकैः ॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
प्रत्येकं जुहुयादेतैर्मार्कण्डेयेति मन्त्रतः ॥
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
आयुरारोग्यमैश्वर्यं देहि मे मुनिपुङ्गव ॥
मृत्युंजयं समुद्दिश्य दूर्वामिश्र तिलैः सह ।
अयुतं वाऽयुतार्धं वा त्रिसहस्रं वा सहस्रकम् ॥
होमं कृत्वा विधानेन उपदेवान् यजेत् पृथक् ।
अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः ॥

कृपः परशुरामश्च एतांश्चैव पृथक् पृथक् ।
लाजहोमं प्रकुर्वीत यथाविभवविस्तरम् ॥
श्रीसूक्तं रुद्रजाप्यं चायुष्यं पुरुषसूक्तकम् ।
वेदपारायणं चैव कर्तव्यं तु विशेषतः ॥
होमशेषं समाप्याथ पूर्णाहुतिमतः परम् ।
कलशोदकमादाय अभिषेकं तु कारयेत् ॥
यजमानं सपत्नीकं बंधुवर्गसमन्वितम् ।
शांतिसूक्तं पुरुषसूक्तं परं मृत्यो तथैव च ॥
आयुष्यं पवमानं च शिवसंकल्पषड्चम् ।
महाशान्ति प्रजप्याथ कलशं च प्रदापयेत् ॥
अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् ।
सालङ्कारां सवस्त्रां गामाचार्याय निवेदयेत् ॥
दश दानानि विप्रेभ्यः सुवर्णं शतमानकम् ।
आज्यस्यावेक्षणं कुर्यात् तिलदानं तथैव च ॥
ब्रह्मणामाशिषो ग्राह्या नववस्त्रं तु धारयेत् ।
नीराजनं प्रकुर्वीत देवानामभिवादनम् ॥
ब्राह्मणान् भोजयेत् पश्चात् सहस्रं वा शतं तु वा ।
बन्धुभिः सह भुञ्जीत दीर्घमायुश्च विन्दति ॥
एवं यः कुरुते सम्यग्ग्रहशान्तिं विधानतः ।
तस्यायुः शतवर्षान्तं भवेदिति विनिश्चितम् ॥
सर्वारिष्टविनाशश्च सर्वसंपद्भविष्यति ।
इत्युग्ररथशान्त्याख्या षष्टितमाब्दशान्तिः ॥

अथ प्रयोगः ॥ कर्ता षष्टितमवर्षारम्भदिने तद्वर्षान्तर्गतजन्मर्क्षे वा शुभकाले चन्द्रताराबलान्विते मंगलस्नानं विधाय कृतनित्यक्रियो विप्रानामंत्र्य तेभ्योऽनुज्ञां प्राप्य द्विराचमनादि देशकालस्मरणान्ते—मम जन्मनः सकाशात् षष्टितमवर्षप्राप्त्या भविष्यत्वेन सूचितानाम् अपमृत्युदुःस्वप्नदर्शनमातापितृमृतिभार्यापुत्रवियोगग्रहपीडाराजभयविविधरोगच्छायाविकृतिस्फुटनक्षत्रध्रुवाद्यदर्शनयक्षरक्षोभूतप्रेतपिशाचादिविविधदर्शनानाम् अन्येषां च महोत्पातानां रिष्टरूपाणां सद्यःपरिहारपूर्वकं सर्वारिष्टविनाशदीर्घायुरारोग्यसर्वसंपद्भवनद्वारा श्रीप० सग्रहमखां शौनकोक्ताम् उग्ररथशान्ति

करिष्ये इति संकल्प्य गणेशपूजादिनान्दीश्राद्धान्ते आचार्यं ब्राह्मणमृत्विजश्च वृणुयात् । तत आचार्य आचमनादिप्रादेशकरणान्ते ग्रहस्थापनादिकलशप्रार्थनान्तं कृत्वा तन्नैर्ऋत्यां स्थंडिलेऽग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वादध्यात् । ग्रहादिकीर्तनान्ते मार्कण्डेयं प्रधानदेवं समिदाज्यचरुदूर्वापायसैः प्रतिद्रव्यं १००८ संख्याभिराहुतिभिः । अष्टोत्तरशतसंख्याभिर्वा । मृत्युंजयं दूर्वातिलैः प्रतिद्रव्यं ५०००।२५००।१५०० पञ्चशतसंख्याभिर्वा । यद्वा तिलमिश्रदूर्वाभिः १००००।५०००।३००० सहस्रसंख्याभिर्वा । अश्वत्थामानं बलिं व्यासं हनुमन्तं बिभीषणं कृपं परशुरामं चैतानुपदेवान् लाजैः प्रत्येकं २८ अष्टसंख्याभिर्वा । शेषेणेत्यादिसमिदाधानान्ते ग्रहाणामुत्तरतः मही द्यौरित्यादिविधिना कलशं संस्थाप्य इमं मे इति जलेनापूर्य गन्धद्वारामिति गंधम् । या ओषधीरिति सर्वौषधीः । रुवति भीम इति पञ्च त्वचः । गायत्र्यादिमन्त्रैः पञ्च गव्यानि । आप्यायस्वेत्यादिभिः पंचरत्नानि च क्षिप्त्वा दूर्वानिक्षेपादिपूर्णपात्रनिधानान्ते उक्तलक्षणप्रतिमायां मार्कण्डेयं नाममंत्रेणावाह्य वस्त्रयुग्मेनावेष्ट्य षोडशोपचारैः संपूज्येध्माबर्हिषोः संनहनाद्याज्यभागान्तं कृत्वा यजमानेन त्यागे कृते ग्रहादिहोमोत्तरम् । मार्कण्डेय महाभाग सप्तकल्पान्तजीवन । आयुरारोग्यमैश्वर्यं देहि मे मुनिपुङ्गव स्वाहेति मन्त्रेण समिदाज्यचरुदूर्वापायसानि । त्र्यम्बकमिति मन्त्रेण दूर्वातिलान् तिलमिश्रदूर्वा वा उक्तसंख्यया हुत्वा अश्वत्थाम्ने स्वाहा । बलये० व्यासाय० हनुमते० बिभीषणाय० कृपाय० परशुरामाय स्वाहेति मंत्रैः प्रत्येकं २८ अष्टसंख्याभिर्वा लाजान् जुहुयात् । ततः श्रीसूक्तं रुद्राध्यायं च जपित्वाऽऽयुष्यमन्त्रान् जपेत् । ते च । एष वां देवाविति द्वयोर्वामदेवोऽश्विनौ गायत्री । परावतो य इति सप्तदशर्चस्य सूक्तस्य गयो विश्वे देवा जगत्यन्त्ये त्रिष्टुभौ । जपे० । (आ नो भद्रा इति वाऽऽयुष्यसूक्तं) ततः पुरुषसूक्तं च जपित्वा वेदपारायणं कार्यम् । तदसंभवेऽग्निमीळ इति सूक्तजपः । ततः स्विष्टकृदादिप्रायश्चित्तहोमान्ते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकैः सकुटुम्बं बन्धुवर्गयुतं यजमानमभिषिञ्चेत् । तत्र मन्त्राः । शं न इन्द्राग्नी इति पंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वे देवास्त्रिष्टुप् । सहस्रशीर्षेति षोडशर्चस्य० । परं मृत्यो इति चतुर्दशर्चस्य सूक्तस्य संकुसुको विश्वे देवास्त्रिष्टुप् । एकादशी प्रस्तारपङ्क्तिस्त्रयोदशी जगती चतुर्दश्यनुष्टुप् । एष वां देवाविति द्वयो० । परावतो य इति सप्तदशर्चस्य० । स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छंदाः सोमः पवमानो गायत्री । यजाग्रत इति षण्णां प्रजापतिर्मनस्त्रिष्टुप् । अभिषेके० । ततो ग्रहमन्त्रैः सुरास्त्वामित्यादिपौराणैः तच्छं योरित्येतेन चाभिषिक्तो यजमानो धृत-

शुक्लांबरगंधमाल्योऽभिषेकवस्त्रमाचार्याय दत्त्वा विभूतिं धृत्वा आचार्येण आ नो भद्रा इत्यादिमहाशान्तिमन्त्रजपपूर्वकं देवतोत्तरपूजने कृते मार्कण्डेयादीन् प्रार्थयेत्। मार्कण्डेय महाभाग० ॥ द्रौणे मे त्वं महाभाग रुद्रतेजःसमुद्भव । आयुर्बलं यशो देहि अश्वत्थामन्नमोऽस्तु ते ॥ दैत्येन्द्रकुलसंभूत यज्ञदानाक्रियारत । बलेत्वां शरणं यामि दीर्घमायुः प्रयच्छ मे ॥ वसिष्ठकुलसंभूत वेदशास्त्रविशारद । नारायणांशसंभूत वेद-व्यास नमोऽस्तु ते ॥ अंजनागर्भसंभूत कपीन्द्र सचिवोत्तम । रामप्रिय नमस्तुभ्यं हनुमन् रक्ष मां सदा ॥ बिभीषण नमस्तुभ्यं रामपादाब्जपूजक । आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनंदन ॥ द्विजेन्द्र भरताचार्य सर्वविद्याविशारद । शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥ रैणुकेय महावीर्य कार्तवीर्यकृतान्तक । आयुः प्रयच्छ मे राम जामदग्न्य नमोऽस्तु ते ॥ तत आचार्यादीन् संपूज्य आचार्याय मार्कण्डेयप्रतिमा-सहितं कलशं सालंकारां सवत्सां गां च दत्त्वा ब्रह्मादिभ्यो गवादिदशदानानि शतगुञ्जापरिमितं सुवर्णं च विभज्य दद्यात् । एतावत्स्वर्णाशक्तौ सर्षपादिशतसम-तोलितम् । गवादीनां प्रत्यक्षदानासंभवे तन्मूल्यं देयम् । ततः विसर्जितग्रहपीठदानान्ते कांस्यपात्रे आज्यं विलोक्य सदक्षिणं तत्पात्रं ब्राह्मणाय दत्त्वा तिलदानं च कृत्वा ब्राह्मणाशिषो गृहीत्वा नववस्त्रं धृत्वा पुरन्ध्रीभिर्नीराजितो देवानभिवाद्य सहस्रं शतं वा विप्रान् संभोज्य भूयसीं दत्त्वा कर्म समाप्य सुहृद्युतो भुञ्जीत भुञ्जीत ॥

इत्युग्ररथशान्त्याख्यषष्टितमाब्दशान्तिप्रयोगः समाप्तः ॥

---

## शौवायनोक्ता उग्ररथशान्तिः ।

कैलासशिखरे रम्ये सर्वदेवनमस्कृतम् ।
प्रणम्य शंकरं देवं गुहः पप्रच्छ सादरम् ॥
स्वामिन्नुग्ररथो नाम सर्वप्राणिभयंकरः ।
पुत्रपौत्रक्षयकरो धनधान्यविनाशनः ॥
राज्यभ्रंशकरो राज्ञामित्येवं बहुशः श्रुतम् ।
कोऽयं न ज्ञायते सम्यक् एष कः परिकीर्त्यताम् ॥

ईश्वरः—साधु ते कथयिष्यामि तमुग्ररथमादरात् ।
महामृत्युसमः प्रोक्तः प्राणिनां सर्वनाशनः ॥

महाकायो महादंष्ट्रो घोररूपी भयानकः ।
आविर्भावे यस्य पुत्रधनधान्यादिनाशनम् ॥
भवेत् पीडा च महती राज्ञां राज्यविनाशनम् ।
अनावृष्टिश्च महती शत्रुपीडा तथैव च ॥
गजाश्वरथनाशश्च स्वराज्यभ्रंशनं तथा ।
प्रादुर्भावे भवन्त्येते दोषा उग्ररथस्य वै ॥
उत्पत्त्यब्दादुग्ररथः षष्टिमेऽब्दे प्रकीर्तितः ।
यस्याविर्भावमात्रेण संसारी भयमाप्नुयात् ॥

गुहः—कथं भवेत् तद्विस्तारः प्राणिनां वद शंकर ।

शंकरः–गुहोग्ररथशान्तिं ते कथयिष्याम्यहं शृणु ॥
यदाचरणमात्रेण संसारी मुच्यते भयात् ।
पुत्रान् पौत्रान् प्रपौत्रांश्च धनधान्यादिकं तथा ॥
राजा राज्यं गजानश्वान् कोशवृद्धिं रिपुक्षयम् ।
लभते महतीं भक्तिं विष्णुपादेऽधिगच्छति ॥
तस्माच्छान्तिः प्रयत्नेन कर्तव्या ननु षण्मुख ।

गुहः—कीदृग्विधा शान्तिरेषा देवता काऽत्र कीर्तिता ॥
को विधिः कीदृशो मन्त्रः किं फलं परिकीर्तय ।
कस्मिन् देशेऽथ काले वा कस्मिन् केन विधीयते ॥
एतत् सर्वं प्रभो ब्रूहि तत्त्वतः पृच्छतो मम ।

ईश्वरः-शैवायने प्रसिद्धेयं मुनिभिः परिकीर्तिता ॥
गुहोग्ररथशान्तिं तां सावधानमनाः शृणु ।
वर्षे षष्टितमे प्राप्ते ब्राह्मणः स्वयमाचरेत् ॥
क्षत्रियो द्विजवैश्यो वा शूद्रो वाऽन्योऽथवा पुनः ।
ब्राह्मणैः कारयेत् साधु शान्तिमेतां प्रयत्नतः ॥
जन्मर्क्षेवानुकूलर्क्षैः शान्तिं कुर्याद्विचक्षणः ।
प्रधानदेवता तत्र साक्षान्मृत्युः प्रकीर्तिता ॥
उग्रोऽधिदेवता प्रोक्ता जयः प्रत्यधिदेवता ।
विष्ण्वागारे शिवागारे नदीतीरेऽथवा पुनः ॥

गोष्ठे वाग्न्यगारे वा स्वोत्पत्तिग्राम एव वा ।
शान्तिमेतां प्रकुर्वीत विप्रैरनुगतः शुचिः ॥
स्थण्डिलं परिकल्प्याथ गोमयेनोपलिप्य च ।
प्रसाध्य रंगवल्ल्याद्यैः पुण्याहं नान्दिपूर्वकम् ॥
व्रीहिभारं विनिक्षिप्य तदर्धं तण्डुलं तथा ।
तदर्धं तिलमास्तीर्य अष्टपत्राम्बुजं लिखेत् ॥
विलिख्य तत्र ऱ्हींकारं निक्षिपेत् कलशांस्तथा ।
तस्योपरिष्टात् सौवर्णं राजतं ताम्रमेव वा ॥
अथवा मृण्मयं कुर्यात् यथावित्तानुसारतः ।
तन्तुभिः परिवेष्ट्याथ वस्त्रैराच्छाद्य मन्त्रतः ॥
शतमूलानि पुण्यानि रत्नानि नवसंख्यया ।
मृत्तिका दशसंख्याश्च तथा पल्लवपञ्चकम् ॥
पञ्चवृक्षकषायाणि पञ्चगव्यं तथैव च ।
पञ्चसौगन्धिकं चैव पुण्यं लोहत्रयं तथा ॥
धान्यानि चैव सर्वाणि कुशदूर्वास्तथैव च ।
तीर्थोदकानि सर्वाणि सर्वं कुम्भेषु विन्यसेत् ॥
वापीकूपतटाकेषु नदीप्रस्रवणेषु च ।
सर्वतीर्थानि सर्वाणि जलान्यादाय यत्नतः ।
तैः पूरयेन्मन्त्रपूर्वं कुम्भान्सर्वान् यथाक्रमम् ।
सौवर्णीं प्रतिमां कृत्वा पलाष्टकसमन्विताम् ॥
तदर्धार्धेन वा कुर्याद्यथावित्तानुसारतः ।
अधिप्रत्यधिदैवौ च तदर्धपलसंमितौ ॥
अन्यास्तदर्धपलकाः प्रतिमाः परिकल्पयेत् ।
तत्तत्स्थानादिरूढेषु कुम्भेष्वेताः प्रतिन्यसेत् ॥
आचार्यं वरयेत् पूर्वं शीलवन्तं कुटुम्बिनम् ।
सुरार्चिकं सुशान्तं च वेदशास्त्रार्थपारगम् ॥
शान्तिकर्मविधानज्ञं मन्त्रतन्त्रविशारदम् ।
दुकूलाद्यैरलंकृत्य गन्धपुष्पाक्षतादिभिः ॥

ब्रह्मादीन् ऋत्विजो वृत्वा यथाशक्तिस्त्वलंकृतान् ।
प्रतिमाः पूजयेरंस्तत्तन्मन्त्रजपपूर्वकम् ॥
तत्तद्देवान् प्रवक्ष्यामि सप्तधा चिरजीविनः ।
ततो वत्सरदेवांश्च ततो ह्ययनदेवते ॥
ततो ऋतूंस्ततो मासान् ततः पक्षौ ततस्तिथीन् ।
ततो वारान् ततस्तारास्ततो योगान् यथाविधि ॥
करणानि ततो राशीन् पञ्चब्रह्म ततः परम् ।
सप्तानिलानष्टवसून् नवदुर्गा दिशो दश ॥
रुद्रानेकादशादित्यान् द्वादशैव यथाविधि ।
ब्रह्माणं विष्णु रुद्रौ च विघ्नेशक्षेत्रपालकौ ॥
पूजयेत् प्रयतो देवानभयंकरवास्तुनि ।
वरुणांश्चतुरः पश्चात् मृत्युंजयमथो ग्रहान् ॥
बृहत्कुम्भं ततः कुर्याच्छतच्छिद्रसमन्वितम् ।
प्रत्येकं पूजयेदेतान् तत्तन्मन्त्रैर्विधानतः ॥
अब्दाद्यनेकमेकं वा यथाशक्त्यर्थवैभवात् ।
परं मृत्योतिमन्त्रेण प्रधानं जपमाचरेत् ॥
स्तुहि श्रुतमिति मन्त्रेणाधिदैवं समाचरेत् ।
त्र्यम्बकमिति मन्त्रेण प्रत्यधीशं समर्चयेत् ॥
ततश्चतुर्वेदजपं ततो द्वारजपं तथा ।
भानोस्ततो नमस्कारान् वृक्षराजप्रदक्षिणान् ॥
मतिमान् यत्नतः कुर्यात् ततो रुद्राभिषेचनम् ।
श्रीसूक्तं भूमिसूक्तं च नमकं चमकं तथा ॥
आपो हि ष्ठेति चाब्लिङ्गं मुञ्चामि त्वेति सूक्तकम् ।
एवा पित्र इति प्रोक्तं पावमान्यस्तथैव च ॥
सहती च स्वस्तिमती चायुःसूक्तं तथैव च ।
इन्द्रादिदिगधीशानसूक्तान्येतानि कीर्तयेत् ॥
मण्डपात् पश्चिमे भागे कुण्डं कुर्याद्यथाविधि ।
स्वस्वसूत्रप्रकारेण प्रतिष्ठाप्य हुताशनम् ॥

मुखान्तं विधिवत् कृत्वा ततः कर्म समाचरेत् ।
अथ प्रधानं जुहुयात् समिच्चरुतिलाज्यकैः ॥
दूर्वांकुरैश्च मधुना संसिक्तैः पृषदाज्यकैः ।
प्रधानमन्त्रैः पूर्वोक्तैरष्टोत्तरसहस्रकम् ॥
अष्टोत्तरशतं वापि आचार्यो जुहुयात्ततः ।
तिलहोमायुतं कार्यमवश्यं भूतिमिच्छता ॥
अष्टोत्तरशतसहस्रं वा शतमष्टोत्तरं तु वा ।
पश्चात् होमं यथासंभवमाचरेत् ॥
इतरेषां तु देवानां समिद्भिश्चरुणा घृतैः ।
तत्तन्नाम्नैव जुहुयादृक्षाणां सोपहोमकम् ॥
ग्रहयज्ञविधानेन ग्रहहोमं समाचरेत् ।
जयस्विष्टकृतौ हुत्वा होमशेषं समापयेत् ॥
शतच्छिद्रघटस्तेन मन्त्रपूतेन वारिणा ।
स्नपयेद्यजमानं वा आचार्यो ब्राह्मणैः सह ॥
मार्जयित्वा पुण्यसूक्तैश्चतुर्दिक्षु बलिं न्यसेत् ।
यजमानस्त्वलंकृत्य चाज्यावेक्षणमाचरेत् ॥
ब्राह्मणेभ्यस्ततो दद्यादयःपिण्डादिपञ्चकम् ।
अथालंकृत्य चाचार्यं वस्त्रालंकारभूषणैः ॥
सवस्त्रं प्रतिमां दद्यादाचार्याय हिरण्मयीम् ।
प्रतिमासमसंख्या वा तदर्धं वात्र दक्षिणा ॥
प्रतिमायास्तृतीयांशः सर्वेषां दक्षिणा स्मृता ।
दशदानं ततः कुर्याद्गोदानं तु विशेषतः ॥
हस्त्यश्वरथदानानि धान्यं रत्नानि सद्म च ।
वासः कन्यादिदानानि ब्रह्मस्थापनमध्वरम् ॥
एतानि दद्याद् विप्रेभ्यो यथाविभवसंभवम् ।
दिनेभ्योऽथ विशिष्टेभ्यो भूरिदानं प्रकल्पयेत् ॥
अयुतं भोजयेद् विप्रान् सहस्रं वा शतं तु वा ।
सर्वान् कामानवाप्नोति य एतां शान्तिमाचरेत् ।

पुत्रान् पौत्रान् प्रपौत्रांश्च दीर्घमायुश्च वैभवम् ।
हस्त्यश्वरथवृद्धिं च कोशवृद्धिं च पुष्कलाम् ।।
विष्णुभक्तिमवाप्नोति शिवभक्तिं तथैव च ।
य एतामाचरेदुग्ररथशान्तिं षडानन ।।
शत्रवोऽस्य विनश्यन्ति सर्वदा सुखमेधते ।।

।। इत्युग्ररथशान्तिः समाप्ता ।।

## शुद्धिपत्रम्

------

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | २ | तन्म | तन्मे |
| ११ | २ | सुवर्देवां० | स्वर्देवां० |
| ११ | ५ | ऋव्य० | कव्य० |
| ११ | १६ | विटप० | विट० |
| २० | १४ | सङ्कुसुको त्रिष्टुप् | सङ्कुसुकस्त्रिष्टुप् |
| २४ | १४ | मधुच्छन्दो वर्धमानो जगती | मधुच्छन्दा अग्निर्गायत्री |
| २८ | ७ | सद्यो यक्ष्ये | यक्ष्ये |
| ३१ | २ | माधुच्छन्दसो | मधुच्छन्दा |
| ,, | १३ | जगती | त्रिष्टुप् |
| ३४ | ७ | पवमानः | मधुच्छन्दाः पवमानः |
| ४७ | ८ | प्रसाद० | प्रासाद० |
| ४७ | ९ | आग्नेयाद्यष्ट० | पूर्वाद्यष्ट० |
| ४८ | ६ | नमः इति | इति |
| ५३ | २८ | चतुर्वारं | अष्टवारं |

*Printed by:*— B. P. Soman, at the Modern Printing Press, 391 Narayan Peth, Poona-2.

*Published by:*— Dr. R. N. Sardesai, L. C. P. S., Dipl. Physic. Therapie (Leipzig). Proprietor, Oriental Book Agency, 15 Shukrawar, Poona-2.